# कलिवर्ज्यप्रकरणे श्रौतकर्माणि - एका चिन्ता

'पुरुषस्य शिरो नास्ति वायव्यः क्रियते यदा । प्राजापत्यो यदा पश्च पशुकल्पस्तदा भवेत्। कलौ शिष्टविगर्हत्वादेष पक्ष उपेक्षितः ॥' इति वासुदेवदीक्षितकृताग्निचयनकारिकासु पुरुषशिरस उपधानविषये पठितोऽयं श्लोकः। अत्र किञ्चिच्चिन्त्यं वर्तते । ननु किमर्थं चिन्ता ? नात्र श्लोके किञ्चित्तिरोहितं सन्दिग्धं वा वर्तते येन चिन्ता करणीया । पुरुषशिरस उपधानस्य कलियुगे शिष्टैर्निन्दितत्वादग्निचयने तस्योपधानं न कर्तव्यमिति श्लोके स्पष्टा वचनव्यक्तिः । तथा चानुष्ठातृभिर्न क्रियतेऽविच्छिन्नपरम्पराऽऽगतप्रयोगानुसारिभिः। शिष्टानां य आचारः सोऽपि धर्ममूलम् । 'महाजनो येन गतः स पन्था' इति च महाभारते। अतो नास्ति किञ्चिच्चिन्त्यमत्र विषये इति । न, श्रुतिस्मृतिविरोधात् । तैत्तिरीयश्रुतौ तावत् 'सहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वाय' (तै.सं.५.२.९.४९) इति पुरुषशिरस उपधानं विहितम् । अस्य सायणभाष्यम् - 'अत्र हि पुरुषशीर्षमश्वर्षभवृष्णिबस्तानां शिरांस्युपधेयानि । तेषां मध्ये यः पुरुषः स एक एव पशूनां सहस्रं यजमानाय प्रतियच्छति । अन्ये त्वश्वर्षभवृष्णिबस्ताश्चत्वारः पशवो मिलित्वा पशूनां सहस्रं यजमानाय प्रयच्छन्ति । तथा सत्यश्वादिभ्यः पुरुषस्यातिप्रदेयत्वात् तदीयं शिरो मध्य उपदध्यात् । तच्चोपधानं वीर्यसाहित्याय सम्पद्यते' इति । शतपथब्राह्मणे च 'पशुशीर्षाण्युपदधाति । पशवो वै पशुशीर्षाणि पशूनेवैतदुपदधाति । तान्युखायामुपदधाति। .... अथ पुरुषशीर्षमुद्गृह्णाति । महयत्येवैनदेतत् । .... अथैनानुपदधाति । पुरुषं प्रथमम् । पुरुषं तद्वीर्येणात्यादधाति । मध्येपुरुषम् अभित इतरान् पशून् । पुरुषं तत्पशूनां मध्यतोऽत्तारं दधाति । तस्मात्पुरुष एव पशूनां मध्यतोऽत्ता । (श.ब्रा.७.५.२.१ तः १४) इति ।

आपस्तम्बादिभिर्ऋषिभिः प्रणीतेषु श्रौतसूत्रेषु पुरुषशीर्षोपधानं विहितम् । तद्यथा - 'सप्तैकविंशतिं वा माषानादाय पुरुषशिरोऽच्छैति वैश्यस्य राजन्यस्य वेषुहतस्याशनिहतस्य वा । माषानुपन्युप्यायं योऽसि यस्य त इदं शिर इति पुरुषशिरः प्रच्छिद्यैतेन त्वमत्र शीर्षण्वानेधीति सप्तधा वितृण्णां वल्मीकवपां शिरसः स्थाने प्रतिनिदधाति । ... इदमस्माकं भुजे भोगाय भूयादिति पुरुषशिर आदायोदेह्यग्ने अधि मातुः पृथिव्या इत्याहरति । परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव .... रक्षांसि विश्वहेति तिसृभिः पर्यग्निकृत्वा मृदा प्रलिप्य निदधाति ।' (आप.श्रौ.सू. १६.६.२,३,६,७); 'तस्मिन्त्सुपर्णो मधुकृत्कुलायीति पुरुषशिर आदाय आदित्यं गर्भमित्युखायां पुरस्ताच्चुबुकं प्राचीनमुत्तानं प्राङ्मुख उपधाय चित्रं देवानामित्यर्धर्चाभ्यामक्षि-कट्योर्हुत्वा पशुशीर्षाण्युपदधाति, (आप.श्रौ.सू. १६.२७.७) इत्यापस्तम्बश्रौतसूत्राणि । तथा बौधायनश्रौतसूत्रम् - 'अथैतत् पुरुषशिरो याचति तस्य प्राणेषु हिरण्यशल्कान् प्रास्यति .... अथैनत्प्राचीनमुत्तानमुखायामुपदधाति' (बौ.श्रौ.सू. १०.३३) इति । अतो श्रुतिस्मृतिविहितस्य

पुरुषशिरउपधानस्य शिष्टविगर्हणत्वेन बाधो न युक्तः । श्रुतिस्मृतिविहितस्य बाधं वदतां कथं शिष्टत्वमिति चिन्त्यम् । साक्षाद्विहितकारित्वादेव शिष्टानां शिष्टत्वं न तु साक्षाद्विहितस्य विगर्हणानुयायिनां शिष्टत्वम् । प्रत्यक्षवेदविहितधर्मक्रियया हि तथाकर्तारः शिष्टा इति व्यपदेशभाजो भवन्ति । अतः ये साक्षाच्छ्रुतिस्मृतिविहितस्य पुरुषशिरउपधानस्य निषेधं चोदयन्ति ते न शिष्टाः, वेदविरुद्धत्वात्तेषां निषेधस्य । यत्त्वनुष्ठातृभिः तन्न क्रियत इति तन्न लोकविगर्हणभयात्, किन्तु सूत्रकारैरापस्तम्बादिभिरुक्तपक्षान्तरावलम्बनेन। तथा च महर्षिरापस्तम्बः 'अपि वा सर्वेषामेतेषां स्थाने वायवे नियुत्वते श्वेतमजं तूपरमालभते ॥ वायुमती श्वेतवती वपाया याज्यानुवाक्ये । वायुमती नियुत्वती दैवतस्य ॥ तस्य शिरः प्रच्छिद्य मृदा प्रलिप्य निदधाति' (आप.श्रौ.सू. १६.८.३,४,५) इति । 'यदि वायव्यस्य स्यान्मुख्यस्य स्थाने सर्वेषामुपधानैरुपधाय सर्वेषामुत्सर्गैरुपतिष्ठेत' (आप.श्रौ.सु. १६.२७.१९) इति च । अतो वेदोक्तकर्मणः सूत्रकारैश्च विहितस्य विगर्हणभिया त्यागोपदेशो वेदविदां वेदैकश्रद्धालूनामपेशलमेव ।

यदुक्तमविच्छिन्नपरम्पराऽऽगतप्रयोगानुसारिभिः पुरुषशिरउपधानं न क्रियत इति तन्न लोकविगर्हितत्वात्तदुपधानस्य, किन्तु स्मृतिविहितपक्षान्तराश्रयात् । यदि तेऽपि लोक-विगर्हणकारणादेव पक्षान्तरमाश्रयेयुस्तर्हि वेदे तेषामप्रतिहता श्रद्धा प्रश्नार्हैव भवितुमर्हति। 'महाजनो येन गतः स पन्थाः' इत्यपि, यदि स पन्था वेदबाह्यो वेदविरुद्धो वा स्यात् तर्हि तद्गन्तॄणां महाजनत्वोक्तिर्न युक्ता स्यात् । श्रुत्याचारयोः परस्परविप्रतिषेधे प्राप्ते सति श्रुतिरेवानुसर्तव्या, नाचारः । तथा हि महर्षिणापस्तम्बेनोक्तम् - 'श्रुतिर्हि बलीयस्यानुमानिकादाचारात्, (आप.ध.सू.१.१.४.८) इति । 'त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा । तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयकपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते' (आप.ध.सू.२.६.२३.६) इति च । तथा चोक्तं मीमांसाकौस्तुभे 'श्रुतिस्मृत्यविरुद्धानां शिष्टैर्धर्मबुध्यानुष्ठीयमानानामाचाराणां वेदमूलकत्वम्। अत एव स्मृतौ 'श्रुतिस्मृत्यविरुद्धो यः स सदाचार उच्यते' इत्युक्तम् । .... वस्तुतस्तु आर्यावर्तगतानामप्याचाराणां श्रुतिस्मृतिविरोधेऽग्राह्यत्वात्तस्यैव सदाचारोपलक्षणत्वं न युक्तम्,इति आर्यावर्तवर्तिनामपि शिष्टानां वेदविरुद्धाचाराणां त्याग उक्तः । यत्तु मानवं वचनं 'येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते' (मनु स्मृ .४.१७८) इति तदपि 'सतां मार्गम्' इति विशेषणाद्वेदाविरुद्धाचारपरं व्याख्येयम् । भगवान् व्यासोऽपि 'न जातु कामान्न भयान्नलोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः' इति वदन् लोकविगर्हणादिनिमित्तेन वेदोक्तविधेस्त्यागं निषेधति । तस्मात् पुरुषशिरउपधानस्य श्रुतिविहितस्य शिष्टविगर्हणनिमित्तेन वा कलियुगादिकालभेदनिमित्तेन वा त्यागविधानं नोचितमित्यस्मन्मतिः।

ननु किमत्रास्थाने महानुपन्यासः क्रियते वेदनिष्ठाविषये । न ह्यस्माकं वेदेऽनादरो येनेत्थं

युगधर्मानुसारं क्वचित्कर्मणां त्यागं विदध्महे । धर्मशास्त्रग्रन्थेषु कतिपयवर्षशतैरपि प्रचलितेषु वेदोक्तकर्मानुष्ठातृभिरनुसृतेष्वेव पुराणवचननिबद्धेषु कलिवर्ज्याख्यं प्रकरणमेकं पठ्यते यत्र शास्त्रविहितानामपि क्वचिद्धर्माणां कलियुगविशेषात्तेषां निषेध उक्तः । आर्षेयवचनानि पुराणवचनानि च दर्शितानि प्रमाणत्वेन । एवं धर्मशास्त्रप्राप्त एव त्यागः पुराणादिवचनोपबृंहितोऽस्माभिरनुसृतः, न क्वचित् स्वकपोलकल्पितः शास्त्रं प्रत्यनादरेण, येनास्थाने शास्त्रनिष्ठाविषये वयं भवता श्राव्या भवेम ॥

भोः जीवतु भवान् शरदः शतमद्यप्रभृति धर्मशास्त्रनिबन्धनगतस्य कलिवर्ज्य-प्रकरणस्य स्मारणात् । यास्मन्मनीषा चिरकालिकी कलिवर्ज्यप्रकरणचिन्तनविषया साद्य पूर्यति लेशतः। अवसरश्च लब्धो वासुदेवदीक्षितकारिकोक्तः पुरुषशीर्षोपधाननिषेधरूपः । अतः प्रारभामहे चिन्तां कलिवर्ज्यप्रकरणविषयां नातिविस्तरेण ।

धर्मशास्त्रनिबन्धनग्रन्थेष्विदानीमुपलभ्यमानेषु प्रायेण सर्वेषु निबद्धमिदं प्रकरणं कलिवर्ज्याख्यं यस्मिन् श्रुतिस्मृतिविहितानामपि क्वचित्कर्मणां कलियुगे निषेध उक्तः क्वचिदृषिवाक्योदहरणेन क्वचित्पुराणोक्त्या च । न प्राचीनतरनिबन्धनकारैः सर्वाण्यपि कलिवर्ज्यानि कर्माणि सङ्गृह्योक्तानि स्वनिबन्धने । कानिचन कर्माणि कैश्चन निबन्धन - कारैरन्यानि चान्यैरित्येवं पृथक् पृथक्कर्माणि कलियुगे निषिद्धत्वेनोक्तानि । अर्वाचीननिबन्धनकारैस्तु सर्वैरपि प्राचीनतरनिबन्धनकारैरुक्तानि कलिवर्ज्यानि सर्वाण्यपि कर्माणि सङ्गृह्योक्तानि स्वनिबन्धने । अनेनेदं गम्यते यदन्यदन्यत्कर्म पूर्वमनुक्तमपि कालक्रमेण कलिवर्ज्यत्वेन प्रकरणे सङ्गृहीतमिति । इदानीमुपलभ्यमानेषु धर्मशास्त्रनिबन्धनेष्ववर्वाचीनतरेषु प्रायेण पञ्चपञ्चाशत्कर्माणि कलियुगे निषिद्धानीत्युक्तानि । प्रकृतचिन्तायां श्रौतकर्मप्रकरणात्तान्येव कर्माण्युल्लिख्यन्ते परामृश्यन्ते च प्रायेण । निबन्धनग्रन्थेषु श्रौतस्मार्त-कर्मणामविभागेनैव दर्शनात् श्रौतकर्मसम्बद्धान्येव पृथगत्र निर्दिश्यन्ते । तद्यथा - अग्न्याधानम्, अग्निहोत्रम्, सत्रदीक्षा, गोसवे गोहिंसा, सुराग्रहः, अग्निहोत्रहवण्याश्च लेहः, विप्राणां शामित्रम्, विप्रैः सोमविक्रयः, नरमेधः, अश्वमेधः, राजसूयः, मुखाग्निधमनक्रिया, यज्ञे पशुहिंसा, अग्निवेदसमन्वितस्याघसंकोचनम् इति ।

अत्रेदमवधेयं यत् कलिवर्ज्यत्वेन पठितेषु श्रुत्युक्तकर्मसु तत्सम्बद्धविषयेषु च अग्निचयने पुरुषशिरउपधानविषयोऽन्यतमत्वेन न परिगणितः । अतः 'कलौ शिष्टविगर्ह्यत्वादेष पक्ष (पुरुषशीर्षोपधानपक्षः) उपेक्षितः' (श्लो.सं.१८) इति वासुदेवदीक्षितकारिकावाक्यं निर्मूलकमेवेति भाति यावता प्रमाणभूतमूलवाक्यं कारिकाकृता न दर्शितं भवति । अथवा भवेदप्यस्य प्रमाणभूतं वाक्यं यस्मिन्कस्मिंश्चिद्वा पुराणोपपुराणादिग्रन्थे गूढतया स्थितं यदाधारेण कारिकाकारस्येदं वचनं समूलत्वं भजेत । एवमभ्युपगम्यापि वदामो नेदं प्रमाणत्वेन स्वीकर्तुं शक्यं श्रुतिविरोधात् । न हि स्मृतिः साक्षाच्छ्रुतिवचनं बाधितुमुत्सहते बलीयस्त्वाच्छ्रुतेः । तथा

चोक्तमाचार्येण शबरस्वामिना 'श्रुतिविरुद्धा स्मृतिरप्रमाणम्' इति विरोधाधिकरणे, विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्(जै.सू.१.३.३)इति सूत्रस्य व्याख्यानावसरे । तत्सूत्रभाष्यव्याख्यानावसरे तन्त्रवार्तिककारैः कुमारिलभट्टपादैश्चोक्तम् -'यावदेकं श्रुतौ कर्म स्मृतौ वान्यत्प्रतीयते। तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते' इति । अपि चास्ति सूत्रान्तरं पूर्वमीमांसाशास्त्रे पठितं षष्ठाध्याये षष्ठपादे 'वचनाद्वा शिरोवत्स्यात्' (जै.सू.६.६.२)इति यत्र पुरुषशिरउपधानं परामृष्टं दृश्यते 'शिरोवत्स्यात्' इति सूत्रपदस्य व्याख्यानावसरे भाष्यकारेण शबरस्वामिना 'तत्र शिरोवद्बाधः स्यात् । यथा, पुरुषशीर्षमुपदधातीति वचनसामर्थ्याच्छवशिरसां स्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियत एवमिहापि' इत्युक्तम् । न हि स परामर्शः युगान्तरविषयक इति वक्तुं शक्यं 'क्रियते' इति वर्तमानव्यपदेशात् । यद्यपि सूत्रं शवशिरसः स्पर्शनविषयं तथापि विषयद्वयोपलब्धिर्भवति प्रासङ्गिकी । स्मृतिविप्रतिषिद्धोऽपि श्रुत्युक्तविधिः कर्तव्य एवेति, अनुष्ठातृभिः तत्कालीनैः पुरुषशिरस उपधानं क्रियमाणमेवासीदिति च । यदि पुरुषशिरउपधानस्य कलौ निषेधः प्रमाणमेवाभविष्यत्तर्हि भाष्यकारः सूत्रकारश्च न तदुदाहरिष्यताम् । अन्यच्च । पुरुषशिरउपधानविषये वासुदेवदीक्षितानां स्ववचनव्याहतोक्तिश्चास्ति । तथा हि - चयनकारिकासु पुरुषशिरउपधानपक्षः कलौ शिष्टविगर्हत्वादुपेक्षित इत्युक्तम् । अनेनैव ग्रन्थकर्त्रा स्वप्रणीतायां अध्वरमीमांसाकुतूहलवृत्तौ 'पुरुषशीर्षोपधानवचनं तु निरवकाशत्वात् शवस्पर्शननिषेधं बाधते' (६.६.३)इत्युक्तम् । स्मृत्युक्तस्य शवस्पर्शननिषेधस्य श्रुतिविधानाद्बाधमङ्गीकृत्यापि कारिकासु तद्विपरीतमेवोक्तं तैः । तस्मात्कारिकावचनमप्रमाणमेवेति स्थितं निर्मूलमिति च ।

अत्रोक्तेन स्मृतेः श्रुतेर्बलीयस्त्वन्यायेनैव कलिवर्ज्यप्रकरणे पठितानां सर्वेषामपि श्रुत्युक्तकर्मणां निषेधोऽप्रामाणिक एवेति प्राप्तम् । धर्मशास्त्रप्रणेतॄणामपि मतेनायं श्रुत्यपेक्षया स्मृतेर्दुबलत्व-न्यायोऽङ्गीकृतः । 'तथा च लौगाक्षिः - श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी' इति हरदत्तेन गौतमधर्मसूत्रव्याख्यानावसरे(१.५) उदाहृतम् । धर्मशास्त्रस्मृति- व्याख्यानकारैश्च प्राचीनैरयं न्याय आदृतः । तथा च मेधातिथिः 'न हि प्रत्यक्षश्रुतिविहितस्य स्मृत्या बाधो न्याय्यः, (मनु.४.१७६)इति । 'तेन वेदविरुद्धायाः स्मृतेर्बाधः इति स्थितिः' इति विश्वरूपः (याज्ञ.स्मृ.१.७.) । श्रीसुरेश्वराचार्याः स्वबृहदारण्यकभाष्यवार्तिके मनुस्मृतिमपि 'अपस्मृतिः' इति पदेन व्यवहरन्ति यस्मिन्विषये सा श्रुत्या विरुध्यते । तद्यथा - 'प्रत्यक्षवेदवचनप्रामाण्याद्याश्रयत्वतः। आदौ संन्याससिद्धेरृणानीति ह्यपस्मृतिः' (बृ. संबन्धवार्तिकम् - १.१.४३६), 'ब्रह्मचर्या-देवेत्यादिवाक्यानि शतशः श्रुतौ । श्रूयन्ते तु ऋणवचो विरोधात्स्यादपस्मृतिः' (बृ.वा.१.५.२६७)। उभयत्रापि 'ऋणानि त्रीण्यपाकृत्य' इति मनुस्मृतिश्लोकस्य श्रुतिविरोधादप्रामाण्यमुच्यते । अन्यत्रापि ते दर्शयन्ति 'मुण्डोऽपरिग्रहश्चेति प्रत्यक्षश्रुतिवाक्यतः । तद्विरुद्धं स्मृतेर्वाक्यं नापेक्ष्यं दुर्बलत्वतः' (बृ.वा.३.५.१५८) । अत्र सर्वत्र स्मृतेर्बाधमुक्त्वा तस्या स्मृतेर्गत्यन्तरादर्शनात्तादृशबाधितायाः

स्मृतेरानर्थक्यमेव तेषामिष्टमिति गम्यते।

यत्तु कैश्चिदुच्यते 'क्वचिद् दुर्बलेनापि बलवतो बाधः । यथा 'सौत्रामण्यां सुराग्रहान् गृह्णाति' इति प्रत्यक्षश्रुतेरपि 'कलौ युगे त्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः' इति स्मृत्या। अन्यथानर्थक्यापत्तेः' इति । तदसत् । श्रुतिस्मृत्योः परस्परबलाबलविषये वेदविद्भिराचार्य-शबरस्वामिकुमरिलभट्टप्रभृतिभिः, तथा वेदान्तविद्भिरात्मज्ञैः सुरेश्वराचार्यप्रभृतिभिर्धर्मशास्त्र-ज्ञैर्मेधातिथिविश्वरूपप्रभृतिभिरादृतसमयविरोधात् । स्मृतिविरोधाद्युक्तिविरोधाच्च । दर्शितं च लौगाक्षिवाक्यं 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी' इति । दुर्बलेन बलवतो बाध इत्यनुपपन्नं लोके तथादृष्टत्वात् । ननु दृष्टो लोके बलवतः क्षत्रियस्य दुर्बलेन ब्राह्मणेन पराजयः । न, यत्र ब्राह्मणेन क्षत्रियस्य पराजयो दृष्टस्तत्र तपसि बुद्धिमत्तायां च बलवता एव ब्राह्मणेन तपसि बुद्धिमत्तायां दुर्बलस्य क्षत्रियस्य पराजयो दृष्टः । केवलशारीरक- बलाबलयोस्तु बलवत एव जयः । अपि च बाधितस्मृतेरानर्थक्यभयान्न तया श्रुतेर्बाध्यत्वम् । तादृशस्मृतेरानर्थक्यमपरिहार्यं मोहमूलत्वात्तादृशस्मरणस्येति सन्तोष्टव्यम्। तस्मात् कलिवर्ज्यस्मृतिभिः श्रुत्युक्तकर्मणां यो निषेधः स अप्रमाणमेव ।

धर्मशास्त्रनिबन्धनकारा अपि स्वनिबन्धनारम्भे स्मृत्यपेक्षया श्रुतेर्बलीयस्त्वं निर्घोष्य स्मृतिवचना-न्यपि दर्शयन्ति तदुपोद्बलकत्वेन । तद्यथा - स्मृतिचन्द्रिकायाम् - 'श्रुतिस्मृतिविरोधे स्मृतेर्बाध एव । यथाऽऽह लौगाक्षिः - 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी । अविरोधे सदा कार्यं स्मार्तं वैदिकवत्सदा ॥' .... तदुक्तं चतुर्विंशतौ - स्मृतेर्वेदविरोधेन परित्यागो यथा भवेत् । तथैव लौकिकं वाक्यं स्मृतिबाधात्परित्यजेत्' इति । तथा स्मृतिमुक्ताफले वैद्यनाथीये - 'संग्रहे - श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् । पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः' इत्यपरः श्लोकः पाठितः स्मृतिचन्द्रिकाश्लोकद्वयपठनेन सह। इदं त्वत्र चित्रं यत् - एवं स्मृत्यपेक्षया श्रुतिबलीयस्त्वं प्रतिज्ञायापि श्रुत्युक्तविधीनां कलिवर्ज्यत्वेन निषेध उच्यते तस्मिन्नेव ग्रन्थे स्ववचनव्याघातमविगणय्यैव । एवं स्वग्रन्थे प्रामाण्यविषये कृतप्रतिज्ञाविरोधादपि श्रुत्युक्तकर्मणां निषेधोक्तिर्न प्रमाणं स्यात् ।

अपि च कलौ निषिद्धत्वेनोक्तकर्मणां विषयेषु निबन्धकारेषु विगानमेव दृश्यते । न तेषामैकमत्यं केषुचित् विषयेषु दृश्यते । श्रुतिविषये तावत् - 'सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः' इति श्लोकः निर्णयसिन्धुकारेणैवं व्याख्यायते - 'सुराग्रहस्य तत्कर्तुः सङ्ग्रहो व्यवहारकः' इति । चतुर्विंशतिमतव्याख्याने भट्टोजिरपि एवमेवार्थं कल्पयति । किन्तु कलिवर्ज्यविनिर्णये ग्रन्थकर्ता 'सुराग्रहणस्य सङ्ग्रहः प्रयोगविधिनानुष्ठापनम् । यत्तु सङ्ग्रहपदस्वारस्यानुसारेण सुराग्रहणस्येत्यनेन सुराग्रहणकर्तारं विवक्षित्वा तस्य सङ्ग्रहो व्यवहारः इति व्याख्यानं तन्न । अस्मदुक्तमार्गेण गतिसंभवे लक्षणाश्रयस्य जघन्यत्वात्। किं चैवं सति सौत्रामण्यां सुराग्रहस्य निषेधो न स्यात्, तत्कर्तुः परं व्यवहारनिषेधः स्यात्। तच्च समाचारविरुद्धम्' इति निर्णयसिन्धुमतं

खण्डयति । एवमेव कलिवर्ज्यत्वेन निषिद्धस्य संन्यासविषयेऽपि विगानं दृश्यते । निर्णयसिन्धौ तु 'संन्यासः त्रिदण्डः' इत्युक्तम्। याज्ञवल्क्यस्मृतिव्याख्याकारः अपरार्कस्तु परमहंससंन्यासस्य निषेध इति वदति । स्मृत्युक्तसंन्यासाद्दण्डादिपरिग्रहलक्षणाद्ब्रह्मलोकप्राप्तिफलभूतादन्यः संन्यासः दण्डादिबाह्यलिङ्गवर्जितोऽत्याश्रमलक्षण आत्मज्ञानाङ्गभूतः श्रुत्युक्तो विद्यते इति त्वन्यो विषयः । तथा मातुलकन्याविवाहविषयेऽपि विप्रतिपत्तिः । निर्णयसिन्धुकार आह -'गोत्राद्गोत्रजायाः पितृष्वसुः मातृसपिण्डान्मातुलात्तत्कन्यायाः विवाह कलौ न कार्यः । तेन यानि तद्विधायकानि तानि युगान्तरविषयाणि' इति । स्मृतिचन्द्रिकाकारस्तु न पठत्येवेमं श्लोकं मातुलकन्यापरिणय-निषेधविषयकं कलिवर्ज्यप्रकरणे । अपि चातिविस्तरेण तादृशविवाहं समर्थयति निषेधवाक्यानां पृथग्गतिदर्शनेन स्वव्याख्यानकौशलं प्रकटयन् । स्मृतिमुक्ताफले त्वयं निषेधश्लोकः पठ्यते । तथापि विवाहप्रकरणे मातुलकन्याविवाहं समर्थयति कलिवर्ज्यप्रकरणे पठितं मातुलकन्याविवाहनिषेध-विषयकं श्लोकमविगणय्यैव । एवमेवान्येष्वपि क्वचिद्विषयेषु निबन्धनकाराणां परस्परं विगानं दृश्यते। तस्मादेतेषां विषयाणां कलौ निषेधस्य प्रामाण्यं प्रश्नार्हमेव ।

किं च, निबन्धनेषु कलौ निषिद्धकर्मणां पठनानन्तरमेतानि वाक्यान्युपलभ्यन्ते- 'एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः । समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्, इति । कलेरादावेव एतानि कर्माणि निषिद्धानि शिष्टैरित्येतत्तु प्रायेण श्रद्धां नोत्पादयति शास्त्रग्रन्थेषु कृतपरिश्रमेषु जनेषु । न प्राचीनग्रन्थकारैः कलिवर्ज्यप्रकरणं परामृष्टं कटाक्षेणापि । सन्ति बहून्यधिकरणानि धर्मजिज्ञासायां यत्र कलिवर्ज्यप्रकरणे निषिद्धानि कर्माणि यानि तान्येव प्रकृत्य मीमांसितानि । यदि कलियुगे तानि कर्माणि निषिद्धानि तर्हि तेषां विषये जिज्ञासैव नोत्पद्येत धर्मार्थं प्रवृत्तस्य, निष्प्रयोजनत्वात् । सूत्रकारस्य महर्षेर्जैमिनेः प्रयासो व्यर्थ एव स्यान्निषिद्धकर्मणामनुष्ठानविषये सूत्राणां रचने । तथा तद्व्याख्यातुर्भाष्यकारस्य शबरस्वामिनः भाष्यवार्तिककृतां कुमारिलभट्टानां च श्रमो व्यर्थ एवेति प्राप्यते । यतः कलिवर्ज्यत्वेनोक्तानां श्रौतकर्मणां विषये जिज्ञासा प्रवर्तिता, अत एव तत्काले नासीदेतेषां कर्मणां कलिवर्ज्यत्वेन निषेध इति ज्ञायते । निषेधे विद्यमाने सति तान्यधिकृत्य विचारोऽनुष्ठानविषये नोपापत्स्यतैव, कस्यापि प्रयोजनाभावात् । एवमेवोत्तरमीमांसायामपि संन्यासमधिकृत्य यो विचारः स नैवाभविष्यत् संन्यासस्य कलिवर्ज्यत्वेन निषेधे तत्काले विद्यमाने सति । भगवत्पादैः शङ्कराचार्यैः तच्छिष्यसुरेश्वराचार्यैर्वा स्वग्रन्थेषु संन्यासविचारे संन्यासः कलिवर्ज्यत्वेन पठित इति नैवोल्लिखितः । अपि च बृहद्वार्तिकटीकाकारैः आनन्दज्ञानाचार्यैः संन्यासिनां यत् सार्ववर्णभिक्षाग्रहणं श्रुतिविहितमपि कलिवर्ज्यत्वेन निषिद्धं तत्संन्यासिनां धर्मत्वेन परामृष्टम्। अतः तेषां काले सर्ववर्णभिक्षानिषेधो नासीदेवेति गम्यते । अथवा तस्यास्तित्वेऽपि निष्प्रमाणत्वेन तैरुपेक्षितं स्यादित्यप्यूहितुं शक्यते ।

अपि च प्राचीनकालिकां धर्मशास्त्रव्याख्यातॄणां कालेऽपि कलिवर्ज्यनिषेधानामुल्लेखो नैव

विद्यते । तथा च मेधातिथिः मनुस्मृतेर्व्याख्याता, विश्वरूपो याज्ञवल्क्यस्मृतेर्व्याख्याता च नैकमपि कलिवर्ज्यश्लोकमुदाहरतः स्वव्याख्याने । अपि च मेधातिथिः कालभेदेन धर्मानुष्ठानभेदं खण्डयति । नियतकालत्वात्स्मृतीनामिति हेतोः उद्धारनियोगगोवधस्मृतय उपदिष्टा नानुष्ठेया इति बदतां पक्षमनूद्य वदति - 'तदेतदपेशलम् । न ह्येवंविधः कालनियमः क्वचिदपि श्रूयते सायंप्रातःपर्वादिनियमादन्यत्र । यच्च 'अन्ये कृतयुगे धर्माः' इति तत्प्रथम एव व्याख्यातम् । न हीदं युगभेदेन धर्मव्यवस्थाहेतुः । देशनियमोऽपि प्राचीनप्रवणादि- व्यतिरेकेण मध्यदेशपूर्वदिशकृतो नैवास्तीत्युक्तं 'जातिजानपदान् धर्मान्श्रेणिधर्मांश्च' इत्यत्र। दीर्घसत्रेष्वद्यत्वेऽप्यनुष्ठानसम्भवः । संवत्सरशब्दस्त्वहःसु प्रथम एव दर्शितः । यत्तु नाद्यत्वे केचिदनुतिष्ठन्तो दृश्यन्त इति - उपदिष्टार्थस्य नित्यवदाम्नातस्यापि बहुभिः प्रकारैरनुष्ठानसाधनाशक्त्या फलानिच्छया वा नास्तिकतया वा' (मनु.९.११२) इति । अत्रावधेया विषया एते - पूर्वपक्षी स्मृतीनामेव नियतकालत्वं वदन् श्रुतिविहितस्य नियतकालत्वं युगानुरूपं न चोदयति । तथा च स्मृत्युक्ता-नेवोद्धारनियोगगोवधोपदेशानुदाहरति । नापि पूर्वपक्षी स्वमतस्थापनाय कलिवर्ज्यप्रकरणमाश्रयति यत्रोदाहृतोपदिष्टधर्माः स्मृतिवचनत्वेन निषिद्धाः। श्रुतिस्मृत्युक्तकर्मणां न कालनियमोऽस्ति तत्तत्कर्मणां विहितकालाङ्गनियमव्यतिरेकेण । दीर्घसत्रस्य कलिवर्ज्यपठितस्यानुष्ठानसम्भवं वदता न तेन कलिवर्ज्यप्रकरणं ज्ञातमितिप्राप्तम्। दीर्घकालसत्रस्याननुष्ठाने कलिवर्ज्यत्वं हेतुत्वेन न दर्शितम् । तस्मान्मेधातिथेः काले कलिवर्ज्यमश्रुतमेवेति निश्चितं भवति ।

एवं कलियुगवर्तिनां प्रख्यातशास्त्रतदर्थग्रन्थकर्तॄणां कालेऽविद्यमानत्वात्कलिवर्ज्यप्रकरणस्य, कलेरादौ कानिचन कर्माणि महात्मभिर्बुधैर्निवर्तितानीत्येतन्मृषैव भवितुमर्हति । असत्यप्रतिज्ञापूर्वकं पठितं कलिवर्ज्यप्रकरणं श्रुत्युक्तकर्मणामपि निषेधवाचकं कथं प्रामाण्यपदमारोढुं शक्येत इति विवेकिभिश्चिन्तनीयम् । शक्यं वा कदाचित्प्रामाण्यमभ्युपगन्तुं स्मृत्युक्तकर्मणां निषेधस्य, प्रख्यातर्षिनामग्रहणपूर्वकमुदाहृतत्वात्क्वचित् । किन्तु श्रुत्युक्तकर्मणां निषेधस्तु नैवं शक्यते प्रमाणत्वेनाभ्युपगन्तुमृषिनाम्ना प्रयुक्तोऽपि ।

अपि च कलिवर्ज्यप्रकरणस्यार्वाचीनत्वद्योतकं हेत्वन्तरं विद्यते प्रबलतरम् । विद्यन्ते च शिलाशासनानि नैकानि यत्र कलिवर्ज्यत्वेन निषिद्धान्यपि श्रौतकर्माणि कानिचन विख्यातयशोभिः कैश्चिदनुष्ठितानीति ख्यापितानि । न तानि शासनान्यनृतप्रायाणीति वक्तुं शक्यते प्रमाणत्वेनैव तेषां ग्रहणाल्लोके पुरातत्त्वसंशोधकैः । असति प्रमाणान्तरविरोधे सर्वाण्यपि उट्टङ्कितशासनानि वृत्तकथने प्रमाणान्येवेति हि पुरातत्त्वविदुषां समयः । अन्यथा सर्वत्रानाश्वास एव भवितुमर्हति । कानिचन शिलादिशासनानि दर्शयिष्यन्ते श्रौतकर्मणां कलौ निषिद्धानां प्रत्येकेन विमर्शनसंदर्भे ॥

अथैकैकस्य श्रौतकर्मणः कलिवर्ज्यत्वेन निषिद्धस्य विषये किञ्चिदुच्यते -

१. अग्न्याधानम् -'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा

त्रेताऽपरिग्रहः' इति क्वचिन्निबन्धनेषु व्यासोक्तित्वेन त्रेताग्नीनामाधानं कलियुगे निषिद्धत्वेन पठ्यते। कलियुगवर्ज्यत्वेन पठ्यमानेषु विषयेष्वयमेक एव विषयः कलियुगान्तर्गतकाल- विशेषेण च निषिद्धः । एवं कलियुगसामान्येऽप्यत्रोक्तकालमर्यादायाः पूर्वापरकालयोः को विशेष इति न ज्ञायते। वैद्यनाथीये 'कलियुगनिषिद्धधर्माः' इति वर्णाश्रमकाण्डप्रकरणेऽग्न्याधानस्य निषेधो नोक्तः। किन्तु तस्मिन्नेव काण्डे संन्यासप्रकरणे संन्यासफलकथनान्तेऽयं श्लोको दृश्यते - 'व्यासोऽपि - अग्न्याधेयं गवालम्भं संन्यासं पलपैतृकम् । देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' इति । निर्णयसिन्धौ 'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्' इति श्लोकमुदाहृत्य 'अग्निहोत्रं तदर्थमाधानम्' इति विवृतम् । तत्रैवाधाननिषेधस्य प्रतिप्रसवोऽप्युच्यते - 'एतच्च सर्वाधानपरम्। 'अर्धाधानं स्मृतं श्रौतस्मार्तग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता' इति लौगाक्षिवचनादि'ति स्मृतिचन्द्रिकायाम् । सर्वाधानेऽपि विशेषमाह देवलः - 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे' इति । अत्र पूर्वयुगाश्रितेति लौगाक्षिवाक्ये पूर्वयुगाः कृतादय इत्येकोऽर्थः। अन्ये तु 'युगस्य पूर्वं कलेः पूर्वभागः। स 'चत्वार्यब्दसहस्राणि' इति, पूर्वोक्तवाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नः। तस्मिन् भागे सर्वाधानं कार्यम् । तदुत्तरं यावद्वर्णविभागोऽस्ति इति वाक्याद्वर्णविभागपर्यन्तमर्धाधानम्, इत्याहुः ।

एवमग्न्याधानस्य कलियुगे तदन्तर्गतकालविशेषे वा निषेधः, निषेधस्य सर्वाधानार्धाधानविषयत्वेन विभज्य प्रतिप्रसवोक्तिः, वर्णविभागावस्थापर्यन्तोऽनुग्रहः सर्वमेतदप्रमाणमेवेत्यस्मन्मतिः । न तावत् श्रुत्युक्ताग्न्याधानस्य स्मृतिवचनेन, पुराणवचनेन वा बाधो युक्तो यद्विषयप्रतिप्रसवार्थं स्मृत्यन्तरवचनाश्रयं युक्तं स्यात् । स्मृत्युक्तकर्मणामेव कालनियमत्वानुपपत्तिर्दर्शिता पूर्वमेव मेधातिथिवचनव्यक्त्या । श्रुत्युक्तकर्मणस्तु युगानुरूपः कालनियमः तत्रापि कलियुगान्तर्गतकालविशेषेण तस्यानुष्ठाननिषेधश्चात्यन्तमपेशल इत्येवास्मत्सदृशानां मन्दमतीनां श्रुतिमेवाबाध्यप्रमाणत्वेन नित्यप्रमाणत्वेन च गृहीतवतां निर्धारणम् । किन्तु, स्मृतिरपि श्रुतेर्बलीयसी भवितुमर्हति युगनियमानुगुणमिति मन्यमानानां स्मृत्यवलम्बिनां विवेकिनां कलिप्रभावितानामिदं सर्वं निषेधवचनं शोभनं स्यात् ।

न हि 'सर्वाधानं ... पूर्वयुगाश्रिता' इति लौगाक्षिवचनं कलियुगे तदन्तःपातिकालविशेषात्परं वा सर्वाधानस्य निषेधकृत् । तद्धि वाक्यं पूर्वकालानुष्ठानद्योतनमात्रेण पर्यवस्यति । यदि तत् पूर्वयुगानन्तरकाले निषेधेऽपि व्याप्रियते तर्हि वाक्यभेदस्स्यात् । न स युक्तः । अपि च पूर्वकालिकामाश्रयणकथनं त्विदानीन्तनकालेऽपि तस्यानुष्ठानस्तुत्यर्थमिति कुतो न ग्राह्यम् । एवमेव किल श्रुतावुक्तस्य पूर्वकालिकानां समाचारोऽधुनातनैराचरणार्थमिति व्याख्यातमात्मविद्भिर्भगवत्पादैर्पूज्यैः शङ्कराचार्यैः स्वबृहदारण्यकोपनिषद्भाष्ये । तद्यथा- 'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते

ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ. ४.४.२२) इति बृहदारण्यकोपनिषद्वाक्यं विस्तरेण व्याख्याय वदन्ति भाष्यकाराः 'यस्मात्पूर्वे विद्वांसः प्रजादिकर्मभ्यो निवृत्ताः प्रव्रजितवन्त एव, तस्मात् अधुनातना अपि प्रव्रजन्ति प्रव्रजेयुरिति' इति । अतोऽनेन लौगाक्षिवचनमात्रेण सर्वाधानं कलौ निषिद्धमिति वक्तुं न शक्यम् । पक्षेणाभ्युपगम्याप्यस्य वाक्यस्य निषेधसामर्थ्यम्, पृच्छामो वयम्- किमिदं वाक्यं कलेरारम्भे एव स्मृतो वा आरम्भानन्तरं वेति । यदि कल्यारम्भानन्तरं स्मृतं चेत् तत्स्मरणपूर्वकाले कलियुगे सर्वाधानानुष्ठातॄणां का गतिः कलौ निषेधात्तस्यानुष्ठानस्य? यद्यारम्भ एव स्मृतश्चेत् कथं विज्ञानेश्वरादिभिः कलियुगवर्तिभिर्याज्ञवल्क्यादिस्मृतिव्याख्याने सर्वाधानस्य सत्त्वमेव कलावपि दर्शितम्? तथा हि विज्ञानेश्वरः याज्ञवल्यस्मृतौ आचाराध्याये श्राद्धप्रकरणे 'अग्नौकरिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् । कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत्' (याज्ञ.१.२३६) इति श्लोकव्याख्यान एवं वदति -'यद्यप्यग्नावित्यविशेषेणोक्तं तथाप्याहिताग्नेः सर्वाधानपक्षे औपासनाग्नेरभावात्पिण्डपितृयज्ञानन्तरभाविनि पार्वणश्राद्धे विहृतदक्षिणाग्नेः सन्निधानाद्दक्षिणाग्नौ होमः -'कर्म स्मार्तं विवाहाग्नौ' इत्यस्यापवाददर्शनात्। यथाह मार्कण्डेयः -'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः। अनाहिताग्निस्त्वौपवसथेऽग्न्यभावे द्विजेऽप्सु वा' इति । अर्धाधानपक्षे त्वौपासनाग्निसद्भावादाहिताग्ने- रनाहिताग्निरिवौपसनाग्नावेवाग्नौकरणहोमः' इति । अत्राग्नौकरणं सर्वाधानपक्षे दक्षिणाग्नाविति स्पष्टवचनादिदं गम्यते यद्विज्ञानेश्वरः कलौ सर्वाधाननिषेधविषय-स्यानभिज्ञ इति ।

ननु चतुश्चत्वारिंशच्छतवर्षप्रभृत्येव कलावग्न्याधानस्य निषेध उक्त इति दर्शितं व्यासवचनेन । सत्यं दर्शितम्, तस्याप्येवमेव प्रश्नार्हत्वम् । यद्ययं निषेधश्लोको व्यसोक्तः कल्यारम्भ एव विद्यमानस्तर्हि कथं पूर्वतनैः कलिवर्तिभिर्नोदाहृतोऽयं निषेध इत्यनुत्तरः प्रश्नः । यद्यस्य श्लोकस्य कालान्तर आविष्कारस्तर्हि कृतं तस्य प्रामाण्यम् । स्मृतिचन्द्रिकायां कलियुगनिषिद्धधर्मेषु नायमग्न्याधाननिषेधः सर्वाधानपक्षनिषेधो वा पठितः । तत्र श्राद्धकाण्डे 'अथोभयविधाग्नौकरणा-र्थाग्निनिर्णयः' इति प्रकरणे ग्रन्थकृदाह - 'सर्वाधाने औपासनासम्भवे त्वापस्तम्बोक्ताग्नौकरणहोमस्य लोपः, न तु वैतानिकाग्नावनुष्ठानम्, 'श्रौतं वैतानिकाग्निषु' इत्यभिधानात् । ... अत एव सर्वाधानेनौपासनासम्भवे धूर्तस्वामिनोक्तं - 'श्राद्धमूर्ध्वं होमात्कर्तव्यं ब्राह्मणस्त्वाहवनीयार्थे इति तस्यापि प्रधानत्वात्' इति । तस्यापि होमादूर्ध्वं क्रियमाणस्यान्नप्रदानलक्षणश्राद्धस्यापीत्यर्थः । पितृयज्ञधर्मकाग्नौकरणस्य तु सर्वाधानेनौपासनाभावेऽपि न निवृत्तिः 'कर्म स्मार्तं विवाहाग्नौ' इत्यादिनोपदिष्टौपासनाग्न्यभावेऽपि 'पितृयज्ञवत्' इत्यतिदेशतः प्राप्तदक्षिणाग्नेस्सम्भवाद्दक्षिणाग्ना-वनुष्ठानम् । अनेनाभिप्रायेण मार्कण्डेयेनोक्तम् - 'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः' इति, इति । एवमेव स्मृतिचन्द्रिकाकारस्यापि कलावग्न्याधाननिषेधः, सर्वाधाननिषेधः,

तत्प्रतिप्रसवश्लोकश्चेति सर्वमेतदज्ञातमेवेति ज्ञायते ।

तस्मादर्वाचीनकाले लब्धसत्ताकस्य सर्वाधानलक्षणाग्न्याधाननिषेधस्य तदनन्तरकाले लब्धसत्ताकस्य प्रतिप्रसवश्लोकस्य निःसन्दिग्धप्रमाणत्वाभावात्, निश्चितप्रमाणत्वपक्षेऽपि श्रुतिविरोधादाधाननिषेधस्य, सर्वाधानार्धाधानपक्षद्वयस्यापि श्रुतिप्रामाण्याविशेषात्, तयोरेकतरस्य सर्वाधानस्य कलौ वर्ज्यत्वेन ग्रहणव्यवस्थाया अन्याय्यत्वात्, कल्पसूत्रभाष्यकारादिभिर्धूर्तस्वाम्यादिभिरादृतत्वादधुनातनकालेऽपि यजमानेनाग्न्याधाने सर्वाधानपक्षाश्रयणं न दोषाय भवतीति निश्चयः ॥

२.अग्निहोत्रम्- इदमपरं श्रुत्युक्तं कर्म यत्कलिवर्ज्यत्वेन निषिद्धम् ।श्लोकश्च पठ्यते -'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्' इति । अयं निर्णयसिन्धौ पठितः । स निबन्धनकारोऽग्निहोत्रपदस्य श्लोकस्थस्याग्न्याधानपरत्वेनार्थं कृतवान् । अतोऽग्न्याधानविषयत्वात्पूर्वोक्तेनैवायं निषेधोऽपि प्रत्याख्यातो भवति ॥

३. अग्निहोत्रहवण्या लेहः- अग्निहोत्रकर्माङ्गभूतस्य यजमानेनाग्निहोत्रहवण्या द्विर्लेहः, लीढाया हवण्याः पुनर्परिग्रहश्च कलौ निषिद्धौ । तथा च 'अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः' इति श्लोकार्धो निबन्धनेषु कलिवर्ज्यप्रकरणे पठितः । अयमपि निषेधोऽप्रामाणिकः स्मृतेः सामर्थ्याभावाच्छ्रौतकर्मणो बाधने । ननु यद्यप्यापस्तम्बकात्यायनादिश्रौतसूत्रेषु स्रुचो लेहो विहितस्तथापि तैत्तिरीयश्रुतौ लेहविधिर्नोपलभ्यते । तथा च बौधायनभारद्वाजश्रौतसूत्रेषु न दृश्यतेऽयं लेहविधिः । अतो माभूल्लेहोऽधुनातनकाल इति कलियुगे निषिद्धत्वेन पठ्यत इति निषेधो युक्त एवेति चेत् । न । न हि क्वचित्सूत्रकारैरनुक्तत्वात् यत्किञ्चित्कर्म तदङ्गं वा कलिवर्ज्यत्वेन घोषणीयम् । सूत्रकारान्तरेणाविधानमेव कलिवर्ज्यत्वे प्रयोजकं चेत्सन्ति परःशतं कर्माणि तादृशानि यान्यपि निषेध्यानि । तत्राग्निहोत्राहवण्याः लेहमात्रे को विशेषः ? यदि बौधायनादिसूत्रेषु नोक्तो लेहस्तर्हि तत्सूत्रानुयायिभिः कामं तत्कर्म न क्रियताम् । न तावता सूत्रान्तरे विहितस्य बाध उपपद्यते । यद्यपि तैत्तिरीये नोपलभ्यतेऽयं लेहविधिः तथापि विद्यत एव श्रुत्यन्तरे स विधिरर्थवादेन च प्रशंसारूपेणोपबृंहितः। शतपथब्राह्मणमाह -'तदु होवाच याज्ञवल्क्यः न वै यज्ञ इव मन्तवै पाकयज्ञ इव वा इति इदं हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यति सर्वं तदग्नौ जुहोति । अथैतदग्नौ हुत्वोत्सृप्याचामति, निर्लेढि । तदस्य पाकयज्ञस्येवेति । तदस्य तत्पशव्यं रूपम् । पशव्यो हि पाकयज्ञः' (श.ब्रा.२.३.१.२१) इति । 'सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययं चैकं कर्म चोदितम्' इति हि वेदविदां समयः सर्वशाखाप्रत्ययैककर्मताधिकरणे पूर्वमीमांसायां द्वितीयाध्यायान्ते पठितः। तस्मिंश्चाधिकरणे 'न चैकं प्रति शिष्यते' (पू.मी.सू.२.४.१९) इति सूत्रव्याख्याने भाष्यकारस्याचार्यस्य शबरस्वामिन इदं वचनम् -'न हि यत्काठकेऽग्निहोत्रं तत्काठकमेवैकं पुरुषं प्रति विधीयते । तैत्तिरीयस्यापि तद्विहितमेव । पुरुषविशेषवचनाभावात् । यच्चाग्निहोत्रस्य किञ्चिदङ्गं विधीयते, सर्वावस्थस्य तदग्निहोत्रस्य । यच्च काठकस्याग्निहोत्रस्य

तच्च तैत्तिरीयकस्येति । विशेषवचनाभावात् । तस्मात्सर्वशाखाभिरेकं समाप्तं कर्मोच्यत इति' इति । अत एव महर्षिभिरापस्तम्बैः शाखान्तरविहितं निर्लेहमग्निहोत्रकर्माङ्गत्वेन सूत्रितम्। अत आपस्तम्बीयैः स्वसूत्रकारैर्विहितोऽग्निहोत्रहवण्या लेहो यथा सूत्रकारेणोपदिष्टस्तथैव कर्तव्योऽग्निहोत्रस्य साङ्गतानुष्ठानप्राप्त्यर्थम् । सूत्रान्तरानुसारिभिश्चानुक्तेऽपि स्वसूत्रकारेणाग्निहोत्राङ्गत्वेन लेहविध्यनुष्ठानं श्रेयस एव भवति सर्वशाखाप्रत्ययन्यायेन। उक्तं चात्र तन्त्रवार्तिके 'तन्त्रैकफलत्वादसमुच्चये येन केनचित्साध्यमाने फलेऽन्येषां वैयर्थ्यप्रसङ्गः' (२.४.१९) इति । अतः कलिवर्ज्यप्रकरणेन निषिद्धोऽपि श्रौतकर्माङ्गभूतोऽग्निहोत्रहवण्या लेहस्तदनन्तरं तस्य परिग्रहश्च यथेतिकर्तव्यतया विहितः स कर्तव्य एव, श्रुतिविहितस्य स्मृत्या बाधानुपपत्तेः।

ननु यथा बौधायनादिसूत्राकारैरनुक्तत्वाल्लेहस्याकरणं न दोषायेति मन्यते तथैव स्मृत्यन्तरेण कलौ निषिद्धत्वात्तस्याकरणं न दोषायेत्येव भवतु, समानत्वादकरणस्योभयत्र । न, अस्ति चात्राकरणे विशेषः द्वयोः पक्षयोः । सूत्रकारेणाविधानाद्यदकरणं तत् तत्सूत्रकारानुसारिणां स्वसूत्रकार एकस्मिन् श्रद्धातिशयं दर्शयतीत्यतो न दोषाय । कलिवर्ज्यनिषेधप्रमाणेनाकरणं तु श्रुतेरपेक्षया दुर्बलायां स्मृतौ श्रद्धातिशयं दशर्यति । आपस्तम्बादिसूत्रानुसारिभिरकरणं तु स्वसूत्रकारे श्रद्धाऽभावमेव तन्न्यूनतां वा दर्शयति । कर्मवैगुण्यं च भवति तेषाम् । श्रद्धाविहीनं कर्म तु तामसमिति भगवद्गीतासूक्तम्(१७-१२) । तस्मात्कलिवर्ज्यभयादग्निहोत्राङ्गभूतस्य श्रुतिविहितस्य स्रुचो लेहस्य तथा लीढायाश्च यथोक्तप्रकारेण परिग्रहस्य च त्यागो न युक्तः श्रुतिप्रामाण्यशरणानाम् ॥

**४. सुराग्रहस्य ग्रहणम्** - निर्णयसिन्ध्वादौ पठ्यतेऽयं श्लोकार्धः - 'सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः' इति । स्मृतिकौस्तुभे तु सुराग्रहः इति सामान्येनैवोदाहृतोऽयं निषेधो न केनचित् विशिष्टकर्मसम्बन्धेन । निर्णयसिन्धुकार उदाहृतवाक्यमेवं विवृणोति - 'सुराग्रहस्य तत्कर्तुः सङ्ग्रहो व्यवहारकः' इति । अनेन विवरणेन सुरायाः निषेधोऽर्थाद्गम्यते न तु साक्षात् । खण्ड्यते चेदं विवरणं कलिवर्ज्यविनिर्णयाख्यग्रन्थे -'यत्तु सङ्ग्रहपदस्वारस्या- नुसारेण सुराग्रहणस्येत्यनेन सुराग्रहणकर्तारं विवक्षित्वा तस्य सङ्ग्रहो व्यवहार इति व्याख्यातं तन्न । अस्मदुक्तमार्गे गतिसम्भवे लक्षणाश्रयस्य जघन्यत्वात् । किं चैवं सति सौत्रामण्यां सुराग्रहस्य निषेधो न स्यात्तत्कर्तुः परं व्यवहारनिषेधः स्यात् । तच्च समाचारविरुद्धं इति' इति । स्वमतं च दर्शयति स ग्रन्थकारः 'सुराग्रहणस्य सङ्ग्रहः प्रयोगविधिनानुष्ठापनम्' इति । तथा च धर्मसिन्धुकारः 'सौत्रामण्यादियज्ञेऽपि सुरापात्रग्रहस्तथा' इत्याह । कलिवर्ज्यश्लोकार्धे अपिशब्देन किं विवक्ष्यत इति न ज्ञायते । स्मृतिकौस्तुभे सुराग्रह इति सामान्योक्तेः यत्र यत्र सुरा विहिता विभिन्नक्रतुषु तत्र तत्र सुराग्रहो निषिद्ध इति गम्यते ।

अयं सुरायाः कलियुगे होमद्रव्यत्वेन निषेधः सर्वथा श्रुतिविरुद्धत्वात्प्रमाणपदं न भजते, श्रुतेर्बलीयस्त्वात्स्मृतेः । शतपथब्राह्मणे सौत्रामण्यां सुराहुतिश्च साक्षाच्छ्रूयते । तद्यथा - 'नेत् सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति' (श.ब्रा.५.५.४.२१) इति । तैत्तिरीये च 'सा सुरा

.... त्रयो ग्रहाः .... अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्व इन्द्राय सुत्राम्णे पच्यस्व .... एताभ्यो ह्येषा देवताभ्यः पच्यते' (तै.ब्रा.१.८.५) इति। तस्माच्छ्रुतिविरुद्धं स्मृतिवाक्यमप्रमाणम्। अतः सुरानिषेधो नादर्तव्यः किन्त्वाहुतिद्रव्यत्वेन सुरा संपाद्या होतव्या च । ननु न हूयत एव सुरा सौत्रामण्यामधुनातनकाले शिष्टैः श्रुतौ श्रद्धायुक्तैरनुष्ठातृभिः । तत्र कथं भवद्वचनं शिष्टाचारविरुद्धं प्रमाणं स्यात्, कलिवर्ज्यप्रकरणस्य च शिष्टैरङ्गीकृतप्रमाणत्वात् इति चेत् । न । श्रुतिविरुद्धमपि स्मृतिवाक्यमाचारं वा प्रमाणत्वेनाङ्गीकुर्वाणानां शिष्टत्वमेव प्रश्नार्हं भवति। श्रुतिस्मृत्योर्बलाबलनिर्णये श्रुतेरेव बलीयस्त्वं स्मृत्यपेक्षयेति निर्णीतं द्वादशलक्षणे । तथा हि मेधातिथ्यादिभिः शिष्टैर्व्यवहारः तेषां ग्रन्थेषूपलभ्यते। त्रसन्ति ते श्रुत्यपेक्षया स्मृतेर्प्राबल्यमङ्गीकर्तुं त्रपन्ते च। एवमेवाचारोपि यो वेदविरुद्धः सद्भिराचरितोऽपि स नानुष्ठेयः। तथा च श्रुतिवचनम् - 'यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि। नो इतराणि' (तै.उप. शीक्षावल्ली -१.११) इति । अत्र शाङ्करं भाष्यम् - 'यान्यपि च अन्यानि अनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्माणि । तानि सेवितव्यानि कर्तव्यानि त्वया । नो न कर्तव्यानि इतराणि सावद्यानि शिष्टकृतान्यपि । यानि अस्माकम् आचार्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि तान्येव त्वया उपास्यानि अदृष्टार्थानि अनुष्ठेयानि नियमेन कर्तव्यानि इति यावत् । नो इतराणि विपरीतानि आचार्यकृतान्यपि' इति। एवं य आम्नायविरुद्ध आचारः स नानुसर्तव्यः शिष्टाचार्यादिकृतोऽपीति स्पष्टम्। तथा च प्रकृते क्रत्वङ्गभूतसुराग्रहग्रहणस्याम्नायविहितत्वात्तत्त्यागो नोचितः। यत्तूक्तमधुनातनकालीनैश्शिष्टैः सुरा न हूयत इति तत्तु आपस्तम्बादिभिर्महर्षिभिः 'पयो ग्रहा वा स्युः' (आप.श्रौ. सू. १७-२-१३) इति पयोद्रव्यस्य सुरास्थाने विकल्पेन सूत्रितत्वात्। श्रुत्यन्तरानुसारिसूत्रावलम्बनेन शिष्टाः सुरास्थाने पय एव जुह्वति सौत्रामण्यामन्यत्र च न तु क्वचित्कलिवर्ज्यप्रकरणोक्तत्वात्सुरात्यागः। यदि कलिवर्ज्यप्रकरणोक्तत्वात्सुरायास्त्यागः तर्हि ते तं क्रतुमेव न कुर्युर्यस्मिन् सुरा विहिता। न तु ते सुरास्थाने पयो गृह्णीयुः कलिवर्ज्यप्रकरणे पयसो विकल्पेनानुक्तत्वात्।

नन्वेवं तर्हि किं निबन्धनकारा न प्रमाणमेव, किं तेषां वचनानि नानुसर्तव्यानि? न। न वयं वदामो निबन्धनकाराः सर्वथा न प्रमाणमिति । तैरुदाहृतप्रमाणवचनं तेषां स्ववचनं वा यदा श्रुतिविरुद्धं तदा तन्नप्रमाणमित्येव ब्रूमः । इदानीं वयं भवन्तं पृच्छामः - किं भोः भवान् निबन्धनकारवचनानि सर्वाणि प्रमाणत्वेन गृह्णाति अथवा कानिचनैव ? किं कलिवर्ज्यत्वेन पठितस्य मातुलसुताविवाहस्य प्रामाण्यं वर्तते न वा? यदि वर्तते तर्हि कथमिदानींतनानामपि शिष्टत्वेन प्रख्यातानां तादृशविवाहे प्रवृत्तिः? न वक्तव्यं स निषेधो ब्राह्मादिविवाहान्तरविषय इति। निषेधस्य सामान्यत्वात्। अन्यच्च - द्विजाग्र्याणामापद्वृत्याश्रयणं कलौ निषिद्धम्। कथमस्य निषेधस्य पालनमधुनातनैः कर्तुं शक्यते इति तु विचारणीयम् । अध्ययनान्ते गुरुचोदितदक्षिणादानमपि

कलौ निषिद्धम् । वेतनग्रहणपूर्वकमध्यापनं तु सकलशास्त्रविगर्हितम्। प्रतिग्रहे तु सत्प्रतिग्रहस्य क्वचिदेव लाभात्कथं ब्राह्मणस्य जीवनं स्यात्कलिवर्ज्यानामक्षरशः पालनेनेति वक्तव्यं भवता । अस्त्विदं जीवनविषयं यथा कथं वा । यदि निबन्धनकाराः सर्वेऽपि सर्वथा प्रमाणभूतास्तर्हि कलौ वाजपेययागः सप्तसोमसंस्थासु पठितोऽपि निषिद्ध इति ग्राह्यः। तथा हि वदति निर्णयसिन्धुकारः - 'सुराग्रहस्योद्देश्यस्य सौत्रामणिविशेषणाविवक्षया वाजपेयेऽपि निषेधः । सौत्रामण्यां तु पयोग्रहा वा स्युः इत्यापस्तम्बोक्तेर्वैकल्पिकपयोग्रहैरप्यधिकारः । वाजपेये तु तत्प्राप्तौ मानाभावात् सोमसुरयोः सहत्यागेनांशे सुराद्रव्यत्वात्तत्प्रख्यतया यागनामत्वेन तां विना संज्ञाऽयोगात् कलौ नाधिकारः इति युक्तं प्रतीमः' इति । किं भोः गृह्णाति वेदं वाक्यं निबन्धनकारस्य प्रमाणत्वेन भवान्? ननु कथं श्रुत्युक्तस्य वाजपेयस्य निषेधोऽङ्गीकर्तुं शक्यते निबन्धनकारवचनमात्रेण । एवमेव किल वयमपि वदामः श्रुत्युक्तस्य कर्मणां तदङ्गानां वा बाधनं न युक्तं निबन्धनेषु पठितत्वमात्रेणेति । तस्मात् सौत्रामण्यां तदतिदेशेनान्येषु क्रतुषु च सुराग्रहस्य श्रुत्युक्तानां निषेधोऽप्रामाणिक एव ॥

५. विप्राणां शामित्रम् - पशुयागेषु पशोः संज्ञपनं न ब्राह्मणेन कर्तव्यं कलाविति ब्राह्मणकृतं शामित्रं निषिद्धम् । अस्ति श्रुतिः - 'क्लोमा चार्धं वैकर्तनं च शमितुः । तद्ब्राह्मणाय दद्याद् यद्यब्राह्मणः स्यात्' इति । अनुपलब्धमूलं चेदं वाक्यं पूर्वमीमांसायामाचार्येण शबरस्वामिना तृतीयाध्याये सप्तमे पादे शमितुरपृथक्त्वाधिकरणस्थस्य 'शमिता च शब्दभेदात्' इति सूत्रस्य व्याख्यानावसर उदाहृतम् । ऐतरेयारण्यके सप्तमे पञ्चके एकत्रिंशाध्याये प्रथमखण्डे क्वचित्पाठभेदेनेदं वाक्यमुपलभ्यते - 'अर्धं चैव वैकर्तस्य क्लोमा च शमितुस्तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यात्' इति । अनया श्रुत्या शमिता ब्राह्मणो वाब्राह्मणो वा स्यादिति प्राप्तम् । आश्वलायनश्रौतसूत्रेषु च पशौ शमितुः भागम् ऐतरेयब्राह्मणानुगुणमुक्त्वा 'तद्ब्राह्मणाय दद्यात् यद्यब्राह्मणः स्यात्' (आश्व.श्रौ.सू. १२.७.११) इति ब्राह्मणशमितुः प्रापणं गम्यते । आपस्तम्बश्रौतसूत्रेषु च -'बाहुं शामित्रे', 'तं स ब्राह्मणाय यद्यब्राह्मणो भवति' इति द्वे सूत्रे पठ्येते(आप.श्रौ.सू.७.२७. १३,१४) यद्यपि पूर्वोदाहृतवाक्यैः शामित्रं ब्राह्मणस्याब्राह्मणस्य वेति प्राप्तम्, तथापि पूर्वमीमांसायां तृतीयाध्याये शमितृपदस्य शमयतीति शमिता इति यौगिकव्युत्पत्तिमुक्त्वा शामित्रं कर्म अध्वर्युणा कर्तव्यं शामित्रमप्याध्वर्यवे समाम्नानात् इत्युक्त्वा शामित्रं ब्राह्मणकर्तृकमेवेति सिद्धान्तितम्(जै. सू.३-७-२९) । तन्त्रवार्तिककारोऽपि भाष्यकारमतं द्रढयति 'याजमानप्रकरणाम्नानात् शामित्रस्य न कथञ्चिदब्राह्मणविषयत्वं विज्ञायते' इति वदन् । अतः पूर्वमीमांसकानां मतेन शमिता ब्राह्मण एव स्यादृत्विक्ष्वन्दतम इति । तदेतत् पूर्वमीमांसकानां मतं नाङ्गीकृतं याज्ञिकैः । तथा च धूर्तस्वामिभाष्यम् -'यद्यपि शमिता श्रपणकर्म करोति, तथापि न भवत्यृत्विक्' (आप.श्रौ.सू.७.१४.४) इति, 'बाहुं पादं शमित्रे । अब्राह्मणः क्षत्रियादिः' (आप.श्रौ.सू.७.२७.१३,१४) इति च । अनेन शामित्रं कर्म ब्राह्मणेतरेणापि शक्यते कर्तुमिति

दर्शितम् । तद्वृत्तिकारः रामाग्निचित् मीमांसकमतमनूद्य स्वमतं वदति 'याज्ञिकानां त्वन्यस्य शमितृत्वात् क्षत्रियवैश्ययोरेव शमितृत्वसम्भवात् 'तं स ब्राह्मणय यद्यब्राह्मणः' इत्यन्वयात् क्षत्रियवैश्ययोश्शामितृत्वे 'तं स ब्राह्मणायेत्येतदिति' (आप.श्रौ.सू.७.२७.१४) इति । एवं मीमांसकमतेन शामित्रं कर्म ब्राह्मणस्यैव तदपि ऋत्विगन्यतमस्यैव इति, याज्ञिकानां च मतेन शामित्रं ऋत्विजोऽन्यस्य ब्राह्मणस्य, अब्राह्मणक्षत्रियवैश्ययोर्वेति प्राप्तम् । तदेवमुभयमतेन प्राप्तं श्रुत्युक्तं ब्राह्मणकर्तृकं शामित्रं कलौ निषिद्धत्वेन परिगणितं कलिवर्ज्यप्रकरणे धर्मशास्त्रनिबन्धनग्रन्थेषु, आदित्यपुराणवचनादिति क्वचिद्धेतुदर्शनेन । श्रुत्युक्तब्राह्मणकर्तृकस्य शामित्रकर्मणः स्मृत्या पुराणवचनेन वा कलौ बाधो न युक्त एव । अपि चोदाहृतरामाग्निचितो वचनात्, धूर्तस्वामिवचनाद्वा कलौ ब्राह्मणशामित्रं वर्जितमिति न ज्ञायते । तथा चायं निषेध आचार्यशबरस्वामिनां काले तन्त्रवार्तिककारकाले वा तथा धूर्तस्वामिनां रामाग्निचितां काले वा न लब्धप्राण आसीदिति गम्यते । यद्येष निषेधः तत्कालेऽप्यभविष्यत्तर्हि मीमांसकानां याज्ञिकानां च परस्परमतभेद एवास्मिन् विषये नाभविष्यत् । अतोऽयं निषेधोऽर्वाचीनकाले लब्धसत्ताक इत्यप्रमाणमेव भवितुमर्हति ।

वासुदेवदीक्षितकृते अध्वरमीमांसाकुतूहलवृत्याख्ये ग्रन्थे 'शमिता ऋत्विक्ष्वेकतमः स्यादिति' आचार्यशबरस्वामिनां मतस्यानुचितत्वं प्रदर्शितम् । तत्रैव ग्रन्थकर्ताह - 'अधिकरणं तु विशासितृपरं ज्ञेयम् । शमिता हि द्वेधा - संज्ञपयिता विशसिता च । संज्ञपने श्रूयमाणश्शमिता ऋत्विग्भ्योऽन्य एव । अतः परिशेषात् विशसितृविषयमेवेदमधिकरणमिति युक्तम् । संज्ञपनन्तु ऋत्विग्भ्योऽन्यश्चातुर्वर्ण्यान्तिर्गतः कश्चित्कुर्यादिति सिद्धम् । अत एव कलिवर्ज्यप्रकरणे 'शामित्रञ्चैव विप्राणाम्' इत्यादित्यपुराणवचनमुपपद्यते । यदि तु ऋत्विजामन्यतम एव शमिता स्यात्तदा कलौ ब्राह्मणस्य शामित्रनिषेधादब्राह्मणस्य चार्त्विज्याभावाच्छमितुरभावे सति पशुयाग एव लुप्येत । तथा सति कलिवर्ज्यप्रकरणे 'सौत्रामण्यां सुराग्रहः ....' इत्यादि व्याकुप्येत । ततश्च पूर्वयुगेषु चतुर्णां वर्णानामन्यतमश्शमिता कलौ तु शूद्र एव शमिता, तत्र ब्राह्मणस्य शमितृत्वनिषेधात् । 'कलावाद्यन्तयोस्स्थितिः' इति धर्मशास्त्रमर्यादया ब्राह्मणशूद्रवर्णौ वर्णान्तिराभावादित्यन्यदेतत्' इति ।

अत्रोदाहृतवाक्येषु यदुक्तं शमितुः द्वेधा भेदः संज्ञपनकर्ता विशसिता चेति, विशसितृविषय-मेवेदमधिकरणमिति युक्तमिति च न तत्रास्माभिः किमप्युच्यते प्रकृतकलिवर्ज्यविषयचिन्ताया-मकिञ्चित्करत्वात् । किन्तु श्रौतविषये कलिवर्ज्यप्रकरणानयनं तु न मृष्यामहे। कथं पुराणवचनं विप्रस्य शमितृकर्मनिषेधपरं प्रामाण्यं लभेत श्रुतिवाक्यबाधनेनेति ग्रन्थकर्त्रा न प्रतिपादितम्, न शक्यप्रतिपादनं च । श्रुतेर्बलीयस्त्वस्य शास्त्रसमये सिद्धत्वात् । यदुक्तमृत्विग्भ्योऽन्यत्वे संज्ञपनकर्मणः, कलिवर्ज्यप्रकरणस्थं वाक्यं 'शामित्रञ्चैव विप्राणाम्' इत्युपपन्नं भवत्यन्यथा पशुयागे लुप्येत इति तन्न युक्तिमत् । शामित्रस्यर्त्विगन्यतमत्वे यदि पशुयागलोपस्स्यात् लुप्यतां नाम स पशुयागः,

कलिवर्ज्यस्य स एवोद्देशः स्यादिति मन्यताम्। तथा च अपरार्केण याज्ञावल्क्यस्मृतिव्याख्यानावसरे स्नातकप्रकरणे उदाहृतम् 'पशुः कलौ न कर्तव्य इत्याह भगवान्भृगुः' इति मार्कण्डेयवचनं सङ्गच्छते। न च शङ्क्यमिदं मार्कण्डेयवचनं मधुपर्कविषय एवातो न पशुयागनिवर्तकमिति, यतो मार्कण्डेयेनोदाहृतभृगोर्वचनं सामान्येनैव कलौ पशुं निषेधति न तु तद्वचनस्य मधुपर्कविषयमात्रेण संकोच उपपद्यते कारणं विना। ननु संकोचे कारणमस्त्येव, श्रुत्युक्तस्य पशुयागस्य न निषधो भवितुमर्हतीति चेत्। एवं तर्हि विप्रकर्तृकस्यापि शामित्रस्य निषेधो न भवितुमर्हतीति गृह्णन्तु, श्रुत्युक्तत्वादेवेति। अनेन सौत्रामण्यां सुराग्रहः इत्यादि व्याकुप्येत इत्येदपि प्रत्युक्तं भवति।

यदपि कलौ शूद्र एव शमितेत्युक्तमवधारणपूर्वकं तदपि न युक्तं पूर्वाचार्यैरन्यथैवोक्तत्वात्। तथा हि आपस्तम्बश्रौतसूत्रभाष्यकारः धूर्तस्वामी 'तं स ब्राह्मणाय यद्यब्राह्मणो भवति' (आप.श्रौ.सू.७.२७.१४) इति सूत्रव्याख्यानावसरे 'अब्राह्मणः क्षत्रियादिः' इति व्याख्यातवान्। तद्वृत्तिकारेण चाब्राह्मणकृतं शामित्रं कर्म क्षत्रियवैशयोरेवेत्यवधारणपूर्वकवचनेन शूद्रस्य शामित्रमर्थान्निवर्तितम्। यदुक्तम् 'कलावाद्यन्तयोः स्थितिः' इति तदतीव मन्दं स्वानिष्टाय च भवति। परमात्मना कर्मार्थं सृष्टानां वर्णानामभावेन कलौ वेदोक्तस्य कर्मणोऽनुष्ठानमेव न सम्भवति। उक्तं च बृहदारण्यकोपनिषदि 'ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्नव्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रम् .... स नैव व्यभवत्स विशमसृजत .... स नैव व्यभवत्स शौद्रं वर्णमसृजत ...' (बृ. १.४.११,१२,१३) इति ब्रह्मणा कर्मार्थं वर्णाः सृष्टा इति। केवलवर्णद्वयमात्रेण ब्राह्मणस्य वैदिककर्मसु प्रवृत्त्यभावात् कलौ न कस्यापि वैदिककर्मस्वधिकारः स्यात्। अपि च कलिवर्ज्यप्रकरणे कलावग्न्याधानस्य निषेध उक्तः। तस्य निषेधस्य प्रतिप्रसवः 'यावद्वर्णविभागोऽस्ति' इति श्लोकेनोक्तः। यदि वर्णद्वयमेव कलौ भवति तर्हि वर्णविभागाभावात् त्रेताग्निपरिग्रह एव न भवति। न च ब्राह्मणतदितराविति वर्णविभागसत्त्वात्कर्मसु प्रवृत्तिर्न निरुध्यत इति वाच्यम्। यतः प्रतिप्रसवश्लोके 'यावद्वर्णविभागोस्ति' इत्येव पठितं न तु 'यावद्ब्राह्मणो विभक्तोऽस्ति' इति। वर्णविभाग इति सामान्योक्तेश्चतुर्णामपि वर्णानामेव ग्रहणं न्याय्यम्। अतः वर्णद्वयमात्रसत्त्वे कलिवर्ज्यप्रकरणप्रकारेण सर्वस्यापि श्रुत्युक्तकर्मणो लोप एव भवतीति महदनिष्टम्। किञ्च नानेकशतानि वर्षाण्यतीतानि यस्मिन् काले क्षत्रियवंशीयाः बहवो राजानः स्वं स्वं राज्यं पालयन्त आसन्। वैदिकसम्प्रदायस्य पोषकाश्चासन्। तथा च ज्ञायते प्रख्यातसंस्कृतग्रन्थेभ्यो ग्रन्थारम्भश्लोकैर्ग्रन्थान्तपुष्पिकादिवचनैश्च।

तैत्तिरीयसंहितायाः सायणभाष्ये ग्रन्थारम्भेऽस्त्ययं श्लोकः - 'यत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः। आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने' इति। प्रपाठकान्ते चास्ति पुष्पिकावचनम् - ' इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्री वीरबुक्कमहाराज-स्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये

प्रथमकाण्डे प्रथमः प्रपाठकः' इति । कलौ वर्णद्वये सति माधवाचार्याः शूद्रस्य राज्ञ आदेशादेव वेदार्थप्रकाशने प्रवृत्ता इत्यापतति । परमशिष्टाः माधवाचार्या न केवलं शूद्रराजस्याज्ञां पालितवन्तः किं तु तत्पालनं स्वयमुद्घोषितवन्तश्चेति चापतति । अपि च शूद्रभूतं वीरबुक्कमहाराजं श्रीमद्विद्यातीर्थमहेश्वरस्य देवस्यापरावतारत्वेन स्तुतिं च चक्रुरित्यपि बलादायति वर्णद्वयस्यैव कलौ स्थितिमङ्गीकुर्वाणानाम् । एवमेव विज्ञानेश्वरोऽपि स्वविरचिते मिताक्षराख्ये याज्ञवल्क्यस्मृतेः व्याख्यानस्योपसंहारे विक्रमार्काख्यस्य राज्ञः प्रशंसापूर्वकमाशिषमपि वदति । अत्रापि विज्ञानेश्वरेण प्रख्यातधर्मशास्त्रज्ञेन शूद्रप्रशंसा कृतेत्यायाति। अपि च लोकविख्याताः अप्पय्यदीक्षितमहाभागाः स्वविरचिते यादवाभ्युदयव्याख्याने प्रवृत्ती राज्ञः चिन्नतिम्मस्य प्रेरणयैवेत्युक्तवन्तः । एवमेव राज्ञः चिन्नबोम्मस्यापि परामर्शः तेषां ग्रन्थेषु कतिपयेषूपलभ्यते । तै रचिते कुवलयानन्दाख्ये ग्रन्थे वेङ्कटपतेः पेन्नुगोण्डाराज्यस्य राज्ञः परामर्शो दृश्यते । कलौ वर्णद्वयपक्षे अप्पय्यदीक्षिता अपि शूद्रानादृतवन्त इत्यनिष्टं प्रसज्यते ।

किं च कुतूहलवृत्त्यादिग्रन्थकर्ता वासुदेवदीक्षितः स्वग्रन्थेषु पुष्पिकावाक्यैः स्वात्मनं श्रीमत आनन्दरायस्याध्वर्युरिति प्रकटयति । एष श्रीमानानन्दरायः शहाजिशरभजितुक्कोजि-भोसलचोल-महीमहेन्द्राणाममात्य इत्यपि पुष्पिकावाक्याद्ज्ञायते । नैते शाहाजिः, शरभजिः, तुक्कोजिः ब्राह्मणराजाः । अर्थात् आनन्दरायः शूद्रराजानामेवामात्य इति प्रापितो वर्णद्वयस्यैव सत्त्वाङ्गीकारात् वासुदेवदीक्षितेन आनन्दरायस्याध्वर्युणा । तथा च वासुदेवदीक्षितः शूद्रसेवानिरतमेवायाजयदिति शूद्रसेवानिरतस्यैव दयया निर्वर्तितनानाविधयज्ञ इति च महदनिष्टं प्राप्तम् । एवं कलौ वर्णद्वयस्यैवाङ्गीकारे प्रख्यातशिष्टाः माधवाचार्यविज्ञानेश्वराप्पय्य दीक्षितादयः, स्वयं च वासुदेव-दीक्षितः शूद्रसेवनान्निन्दार्हा आपन्नाः भवन्ति । शूद्रसेवा धर्मशास्त्रे निन्दिता, तत्सेवने प्रायश्चित्तं च विहितम् । तथा ह्यापस्तम्बः -'यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः । चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम्' (आप.ध.सू.१.७.२७.११) इति । मनुस्मृतौ च 'न शूद्रराज्ये निवसेत्' (४.६१) इति वासमात्रस्यापि निषेध उक्तो यत्र शूद्रो राजा स्यात् । अतः वर्णद्वयपक्षे ब्राह्मणेतरराजस्य राज्ये वस्तुमपि न शक्यते । कथं वासुदेवदीक्षितस्य चोलदेशे वासः शाहज्यादीनां राज्यकाले इत्याक्षेपस्तु दुरुत्तरो भविष्यति । तस्मात् कलौ वर्णद्वयमेवेति कथनं स्वानिष्टायैव भवति।

अपि च पुराणेषु कलौ क्षत्रियराजानां वंशकथनाद्वर्णद्वयकथनमसाध्वेव । 'कलावाद्यन्तयोः स्थितिः' इति तु ब्राह्मणेतरद्विजानां बाहुल्येन शास्त्रोक्तसंस्काराभावेन शूद्रसाम्यत्वमिति प्रायवचनमिति कथञ्चिन्नेयम्, कलियुगान्ते वर्णसंङ्करवशादेवं भवितेति भविष्यद्विषयत्वेन वा नेयम् ।

ब्राह्मणशामित्रस्य कलौ निषेधस्य प्रामाण्ये सति पूर्वमीमांसायां शामित्राधिकरणमेव निरर्थकं स्यात् शमिता ऋत्विक्ष्वेकतमोऽन्यो वेति संशयस्यैवानुपपन्नत्वात् ब्राह्मणस्यैवार्त्विज्यहेतोः । न

च युगान्तरविषयत्वेन सार्थक्यमधिकरणस्य । यतो नेदं शास्त्रमैतिह्यज्ञापनार्थं प्रवृत्तं किं तु पुरुषार्थप्राप्त्युपायप्रदर्शनार्थं वेदवाक्यानां तात्पर्यनिर्णयद्वारेण। युगान्तरे धर्मः एवमिति ज्ञानेन नैदंयुगीनानां पुरुषार्थप्राप्तये प्रयोजनमस्ति। अतो भाष्यकारादीनां शबरस्वाम्यादीनां वृथा श्रमः स्यादधिकरणव्याख्यानेनेति । तस्मात् कलिवर्ज्यप्रकरण उक्तो ब्राह्मणशामित्रनिषेधोऽप्रामाणिक एव श्रुतिविरोधादिति सिद्धम् ॥

६. विप्रैः सोमविक्रयः - निर्णयसिन्ध्वादौ 'शामित्रं चैव विप्राणां सोमविक्रयणं तथा' इति श्लोकेन ब्राह्मणेन सोमलताया विक्रयः कलौ निषिद्धः । शामित्रविषयनिषेधस्तु विमृष्टः । सोमविक्रयनिषेधविषयोऽधुना चिन्त्यते । ब्राह्मणेन सोमविक्रयप्रसङ्गो द्वेधा भवितुमर्हति । यज्ञार्थं दीक्षिताय यजमानायेति , अन्यस्मै यस्मै कस्मै वा लौकिकप्रयोजनाय यथा वैद्यायेति । यद्ययं विक्रयनिषेधो लौकिकविषयकः, भवतु नाम स निषेधः, न किञ्चिदस्ति वक्तुं तत्र । यद्ययं निषधो यज्ञार्थविषयकस्तर्हि न स प्रामाणिक इति वदामः श्रुतिविरोधात्। 'कौत्साद्राजानं क्रीणीयादन्यस्माद्वा ब्राह्मणादित्युक्त्वाहाप्यब्राह्मणादिति' (आप.श्रौ.सू.१०.२०.१२) इति श्रुतिरुदाहृता श्रौतसूत्रेषु । सोमस्य कुत्सगोत्राद्ब्राह्मणात्क्रयः प्रशस्ततरः, तदभावे ब्राह्मणान्तरात्, तदभावे वर्णान्तरेभ्य इति ब्राह्मणवाक्यमित्यर्थः । यदि ब्राह्मणेन विक्रयो निषिद्धस्तर्हि श्रुत्युक्तं प्रशस्ततरपक्षद्वयं नैवाश्रितं स्यात् । अतो ब्राह्मणेन सोमविक्रयोऽनुमत एव ।

ननूदाहृतापस्तम्बसूत्रं यजमानेन सोमक्रयपरं न तु ब्राह्मणसोमविक्रयपरम् । अतो कलिवर्ज्येन कलौ ब्राह्मणसोमविक्रयनिषेधः न श्रुतिविरुद्धः । अपि च तैत्तिरीये सोमविक्रेतुरनिष्टफलं श्रूयते 'तस्मात्सोमविक्रयी क्षोधुकः' (तै.सं.६.१.१०.२.)इति । अतो कलिवर्ज्यनिषेधो नाप्रमाणमिति चेत् । न । सोमविक्रेतुरनिष्टफलकथनं न केवलकलियुगविषयकं किन्तु सार्वकालिकम् । न च श्रुत्युक्तमनिष्टफलं सोमविक्रयनिषेधकम् । अतो न तद्बलेन कलियुगे ब्राह्मणस्य केवलस्य सोमविक्रयनिषेधो युक्तः । यद्यपि आपस्तम्बसूत्रं न विक्रयविधिपरं किन्तु यजमानक्रयपरं तथापि सूत्रे उदाहृतश्रुतिर्ब्राह्मणविक्रयिणमर्थादाक्षिपत्येव । एवमेव श्रुत्यन्तराच्च सोमविक्रयी ब्राह्मण इति प्रापितः । तथा हि शतपथब्राह्मणम्-'अथाग्रेण राजानं विचिन्वन्ति । तदुदकुम्भ उपनिहितो भवति । तद्ब्राह्मण उपास्ते । तदभ्यायन्ति प्राञ्चः' (श.ब्रा.३.३.२.५)इति । अस्यार्थः -'अग्रेण प्राचीनवंशस्य पुरोदेशे उपरवप्रदेशे इत्यर्थः । विचिन्वन्ति साधयन्ति अनुपादेयांशमपनयन्ति । तत् तत्र क्रयप्रदेशे निहितोदककुम्भस्य समीपे 'ब्राह्मणः' सोमविक्रयी निवसेत् । तत् स्थानं प्रत्यभिगच्छन्ति । प्राञ्चः सोमक्रयप्रदेशाभिमुखाः, इति । न हि ब्राह्मणात्क्रीणीयादिति युगान्तरविषय इति वाच्यं कालावच्छेदाभावेन सामान्यवचनाच्छ्रुतेः । नित्यत्वाच्च श्रुतेः। अपि च निषेधवाक्यस्य गत्यन्तरं विद्यते । तद्यथा लौकिकप्रयोजनाय सोमस्य विक्रयणम्। कामं भवतु तद्विषयकोऽयं निषेधो न किञ्चिन्नश्छिन्नम् । अत्रेदमवधेयं यदयं निषेधः सोमविक्रयणस्यैव

न तु तत्प्रतिनिधिविक्रयणस्यापीति । न तु सोमस्य प्रतिनिधेः पूतिकाया वा निषेधः कलिवर्ज्यप्रकरणेऽन्यत्र वोपलभ्यते । अतो ब्राह्मणेन सोमप्रतिनिधेः पूतिकाया विक्रये न दोषः ।

अन्यच्च, पूर्वमीमांसायां तृतीयाध्याये सोमविक्रयी यः स किमध्वर्य्वादीनामन्यतम उतैभ्योऽन्य इति संशयस्य न सोऽध्वर्य्वादीनामन्यतम इति निर्णयः कृतः(जै.सू.३.७.३१) । कलिवर्ज्यस्य प्रामाण्ये सत्ययं संशयः, परिहारश्च नैव लब्धावकाशौ स्यातां ब्राह्मणानामेवार्त्विज्येऽधिकारात् । अतः कलिवर्ज्यप्रामाण्ये सत्यधिकरणं सूत्रं तद्भाष्यं च निरर्थकानि स्युः । न च तदिष्टं धर्मजिज्ञासूनाम् ।

कलिवर्ज्यप्रकरणे पठितोऽयं ब्राह्मणस्य सोमविक्रयनिषेधो मनुस्मृतावप्युक्तः । ब्राह्मणस्य वृत्तिवैकल्यप्राप्तौ वैश्यानां यद्विक्रेयं तद्ब्राह्मणेन विक्रेयं कानिचनोदाहृतानि द्रव्याणि विहाय । विक्रेयनिषिद्धपदार्थेषु सोमः एकतमः । 'अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः । क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान्' (मनु.१०.८८)इति । एवं ब्राह्मणेन सोमविक्रयस्य निषेधे वर्तमानेऽपि कथं कलिवर्ज्यप्रकरणे स निषेधः पुनरुक्त इति न ज्ञायते । अत्र त्विदं चित्रं यदधुनातनयाज्ञिकाः केचन ये कलिवर्ज्यप्रकरणं श्रुतेरपि बलीय इति मन्यमानाः कलिवर्ज्यप्रकरणोक्तान्निषेधान् श्रुतिविरुद्धानपि श्रद्धया पालयन्ति, ते सोमविक्रयनिषेधं न कटाक्षीकुर्वन्ति । तैरनुष्ठीयमानेषु यज्ञेषु ब्राह्मण एव सोमविक्रयी भवति । अधुनातनकाले सोमस्याभावात्प्रायेण तत्प्रतिनिधेरेवोपयुज्यमानत्वान्न सोमविषयकनिषेधः तत्प्रतिनिधावतिदिश्यते इति वा निषेधोऽयं न पाल्यते तैः ॥

७. गोसंज्ञपनम् - स्मृतिचन्द्रिकायां क्रतुवचनं 'न यज्ञे गोवधः कार्यः कलौ....' इति । तत्रैव ब्राह्मे 'ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा । कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्' इति । तत्रैव '.... गोहिंसा चैव गोसवे' इति यज्ञेष्वपि यत्र गोसंज्ञपनं विहितं तत्कलिवर्ज्यत्वेन निषिद्धम् । निर्णयसिन्धौ 'गोमेधश्च तथा मखः' इति, 'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्' इति च गोहिंसा कलौ निषिद्धा । एवमेवान्येष्वपि निबन्धनग्रन्थेषु कलौ गोहिंसानिषेधवाक्यानि संङ्गृहीतानि । श्रुतौ नैकानि कर्माणि सन्ति यत्र गोसंज्ञपनं विहितम् । तद्यथा -'यन्मैत्रावरुणीं वशामालभते' (तै.सं.६.६.७.२८),'स एतास्तिस्रो वशा आलभेत' (मैत्रायणीसंहिता.४.८.६),'अथ मैत्रावरुणीं वशामनुबन्ध्यामालभते' (श.ब्रा.४.५.१.५)इति श्रुतिभिः सोमयागान्ते क्रियमाणेऽनुबन्ध्यायागे वशाया आलम्भनं विहितम् । 'वशा' इति वन्ध्या गौः । 'यदि वशां न विन्देदप्युक्षवश एव स्यात्' (श.ब्रा.४.५.१.९) इति श्रुत्या वशाया अलाभे सेचनसमर्थो बलीवर्दः वशास्थाने विहितः । 'गौर्वा अस्यै शरीरं गां वाव तौ तत् .... यां पितृभ्यो घ्नन्ति' (तै.सं.१.७.२.२)इति पित्रर्थं गोरालम्भनं विहितम् । अयं त्वष्टकाश्राद्धविषय इति सायणभाष्यम् । 'तस्मादेत ऐन्द्रा मारुता उक्षाणः सवनीया भवन्ति । त्रयः प्रथमेऽहन्नालभ्यन्ते । एवं द्वितीये । एवं तृतीये । एवं चतुर्थे । पञ्चोत्तमेऽहन्नालभ्यन्ते - पञ्चशारदीयो वा एष यज्ञः' (तै.ब्रा.२.७.११.३२,३३,३४) इति पञ्चशारदीयाख्ये यज्ञे गोरालम्भनं विहितम् ।

'एष गोसवः । षट्त्रिंश उक्थ्यो बृहत्सामा । पवमाने कण्वरथन्तरं भवति' (तै.ब्रा. २.७.६.१३)इति गोसवः श्रुतौ विहितः। 'ऐन्द्राग्नं पुनरुत्सृष्टमालभेत' (तै.सं.२.१.५.५)इत्येवमादीनि श्रुतिविहितानि कर्माणि स्मृतिवाक्यैः कलौ निषिद्धानि । स्मृतिवाक्यैः श्रुतिचोदितस्य बाधो नैवोपपद्यते श्रुत्युपजीवित्वात्स्मृतेः । ननु शिष्टाः गोहिंसां नेच्छन्ति श्रुत्युक्तकर्मस्वपि । तथा हि आपस्तम्बादयो महर्षयोऽनूबन्ध्यायागे गोस्थान आमिक्षामेव विदधते । न, अनूबन्ध्यायागे गोस्थान आमिक्षाविधानं नार्वाचीनकलिवर्ज्यप्रकरणपठितश्लोकनिमित्तं किन्तु श्रुत्यन्तरोक्तत्वादेव विकल्पत्वेनामिक्षाविधानम् । तथा हि सूत्रम् 'मैत्रावरुणीमामिक्षामनूबन्ध्यायाः स्थाने बह्वृचाः समामनन्तीति' (आप.श्रौ.सू.१३.२३.१०)इति । एवं श्रुत्यवलम्बनेनैव विकल्पविधानं न तु कलिवर्ज्यस्मृत्यवलम्बनेन । कात्यायनश्रौतसूत्रेषु च 'वशाऽभाव उक्षा' इत्युक्त्वा 'उभयाभावे पयस्या' इति वशोक्षयोरभावे पयस्या आमिक्षा विहिता । अपि च श्रुत्युक्तकर्मणि पशूनां संज्ञपनं हिंसैव न भवति । तथा च श्रुतिः'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' (छां.८.१५.१)इति । अतः श्रुत्युक्तकर्मणि यत्प्राणिनां संज्ञपनं लोकदृष्ट्या हिंसेति भवति तत्तु शास्त्रदृष्ट्या हिंसैव न भवति । तेन तादृशहिंसापरिहारार्थं कलिवर्ज्यप्रकरणे पठितानां गोहिंसानिषेधश्लोकानामप्रामाण्यमेव, अप्राप्तप्रतिषेधात् ।

श्रुत्युक्तकर्मणि गोसंज्ञपननिषेधोऽर्वाचीनकालीन इति ज्ञायते प्राचीनग्रन्थावलोकनेन। तथा च मनुस्मृतिव्याख्याता मेधातिथिः स्मृतीनां नियतकालत्वमिति वदन्तं पूर्वपक्षं 'तस्मादुद्धार-नियोगगोवधस्मृतय उपदिष्टाः नानुष्ठेयाः' इत्युपसंहृत्य स्वमतं प्रकटयति 'तदेतदपेशलम्' इति (मनु.९-११२) । मेधातिथिनोदाहृतपूर्वपक्षमते गोवधविषयः स्मृत्युक्तविषयो न तु श्रुत्युक्तविषय इति विशेषावधारणमर्हति । यदि तत्काले श्रुत्युक्तस्यापि गोवधस्य नियतकालत्वं कलियुगान्यकालत्वमभिमतमभविष्यत् तर्हि तस्यापि पूर्वपक्षमतेन परामर्शोऽभविष्यत् । नैवं परामर्शोऽस्ति । अतः नैवं तत्काले श्रुत्युक्तकर्मणां नियतकालत्वपक्ष आसीदिति ज्ञायते । वदति च मेधातिथिः तत्रैव 'न ह्येवंविधः कालनियमः क्वचिदपि श्रूयते, सायंप्रातःपर्वादिनियमादन्यत्र । .... न हीदं युगभेदेन धर्मव्यवस्थाहेतुः' इत्यादि । 'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ। धर्मं चाप्यसुखोदर्कं लोकसङ्क्रुष्टमेव च' (मनु.४-१७६)इति मनुस्मृतिश्लोकव्याख्यानवसरे मेधातिथिः -'.... यद्गर्हतया लोकः सङ्क्रोषति (तत्परित्यजेत्) । यथा गोरवध्यस्य बधः, मांसस्य भक्षणं च तद्विगर्हिततरं पश्वन्तरेभ्यो लोके । दृष्टमूलश्चायमहिस्पर्शवत्प्रतिषेधः । विहितोऽयमर्थ इत्यवैधतया प्राकृतजना अजानाना अधार्मिकत्वं यष्टुः प्रख्यापयेयुस्तेषां च बहुत्वतः प्रसिद्ध्या शिष्टा अप्येवं प्रसिद्धमूलमनवगच्छन्तः परिवर्जयेयुः । तदुक्तं 'धार्मिके सति राजनी'ति । एतदुक्तं पूर्वैर्व्याख्यातमित्यनुगतम् । न हि प्रत्यक्षश्रुतिविहितस्य स्मृत्या बाधो न्याय्यः । इदं तु युक्ततरमुदाहरणम् । नियोगधर्मः स्मृत्या विहितो लोकसङ्क्रुष्टत्वान्न

क्रियते ....' इति । अत्र श्रुत्युक्तस्य गोवधस्य लोकसङ्क्लिष्टत्वनिमित्तं प्रतिषेधमनूद्य तस्य प्रतिषेधस्यान्यायत्वमुक्तम्। न चात्र कलिवर्ज्यश्लोका उदाहृताः श्रुत्युक्तगोसंज्ञपननिषेधविषयकाः। अतो मेधातिथिकाले यद्यपि गोवधः श्रुत्युक्तोऽपि लौकिकैर्विद्विष्टः तथापि कलौ निषेधार्थं पठ्यमानाः श्लोका अधुनातननिबन्धनेषूपलभ्यमानाः न लब्धस्थितिका आसन्निति गम्यते। याज्ञवल्क्यस्मृतेः प्राचीनतरव्याख्याता विश्वरूपो गोवधनिषेधविषये पूर्वपक्षतत्खण्डनप्रकरणे कांश्चित् श्लोकान्पठति - 'ननु विपरीतः शिष्टाभ्युपगमः । न खलु स्मृतिविरुद्धं श्रुत्युक्तमप्याद्रियमाणा दृश्यन्ते । तथा हि -

'गोवधं नानुमन्यन्ते श्रुत्युक्तमपि तद्विदः ।
तस्योपपातकश्रैष्ठ्यं स्मृतौ यस्मादुदाहृतम् ॥
करणं च श्रुतेर्ज्ञातं ज्योतिष्टोमादिकर्मणाम् ।
स्तेयाद्यर्थार्जिनेनापि न तत् स्मृतिविरोधतः॥'
इति पूर्वपक्षः । तत् खण्डनं चानुपदमेवाह -
'मैवं न खलु शिष्टानां क्वचित् स्मृतिविरोधतः ।
श्रुत्युक्तार्थाननुष्ठानं दृढमल्पीयसामपि ॥
न हि च्छागवधं तज्ज्ञा न कुर्वन्ति निवारितम् ।
अवारितः स चेत् स्मृत्या गोवधोऽपि हि तत्समः ॥
स्मार्ताः हि विधयः सर्वे श्रुत्युक्तव्यतिरेकिणः ।
तेन स्मृतिविरुद्धत्वं नाननुष्ठानकारणम् ॥
स्मार्तोऽपि गोवधोऽस्त्यर्घ्यमर्हयेत् प्रथमं गवा ।
नित्यानि चाष्टकादीनि हेतुस्तदकृतौ च यः ॥
वेदमूलबलं वापि भ्रान्तिर्वा वैदिके च सः ।
न तु स्मृतिबलाच्छिष्टा न कुर्युः कर्म वैदिकम् ॥ ....
तेन वेदविरुद्धायाः स्मृतेर्बाध इति स्थितिः ।
श्रूयमाणविरुद्धत्वात्कल्पनानुपपत्तितः॥(याज्ञ.१-७)' इति ।

अत्रावधेया अंशा इमे पूर्वपक्षश्लोके गोवधस्य स्मृतिनिषेधो मन्वादिस्मृत्युक्तोपपातकविषय एव न तु कलिवर्ज्यप्रकरणपठितश्लोकविषयः । अनेन विश्वरूपस्य काले गोवधविषयक-कलिवर्ज्यश्लोका नासन्निति गम्यते । न शिष्टानां स्मृतिविरोधतः श्रुत्युक्तार्थस्याननुष्ठानमित्युक्तम्। अतः तस्मिन्काले श्रुतिविहितस्य स्मृत्या बाधोऽप्रमाणमेवेति शिष्टानां व्यवहार इति ज्ञायते । गोवधस्य छागवधेन तुल्योक्तेः श्रुत्युक्तप्रकारेण गोसंज्ञपनमपि शिष्टानामनुष्ठान आसीदिति गम्यते । स्मृत्युक्तगोवधनिषेधस्य स्मार्तगोवधविषयत्वेन प्रामाण्यमुक्तम् । तस्मात् यथा मन्वादिभिरुपपातकत्वेन परिगणितस्य गोवधस्य श्रुत्युक्तकर्मव्यतिरेकविषयत्वं शिष्टैरङ्गीकृतं

तथैवार्वाचीनकलिवर्ज्यप्रकरणोक्तगोवधस्यापि श्रुत्युक्तकर्मव्यतिरेकविषयत्वमेव भवितुमर्हति । 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' (याज्ञ.१.१५५) इति श्लोकव्याख्याने विश्वरूप आह - 'लोकविद्विष्टं सर्वजनानभ्युपगतं गोवधादीति केचित् । तत्त्वयुक्तं विधानानर्थक्यात्' इति । अत्रापि पूर्वपक्षमतेन गोवधस्य निवारको लोकविद्वेष एव न तु कलिवर्ज्यश्लोक इति ज्ञायते । श्रुतिविधानादेव तस्य निषेधपक्षस्याप्रामाण्यमुच्यते विश्वरूपेण । तस्मात् श्रुत्युक्तगोसंज्ञपनस्य स्मृत्या कलौ निषेधोऽप्रमाणमेव ।

स्मृतिचन्द्रिकायां कलिवर्ज्यप्रकरणे'गोहिंसा चैव गोसवे' इति पठ्यते । तत्र गोसवाख्यं कर्म तैत्तिरीयब्राह्मण उक्तं न तु विस्तरेण । आपस्तम्बादिश्रौतसूत्रेषु चायं क्रतुरुक्तः परं तु न कुत्रापि गोसवे गोहिंसा विधानमुपलभ्यते । अतः कस्य श्रुत्युक्तकर्मणो गोसवाख्यस्यायं गोहिंसानिषेधपरामर्श इति न ज्ञायते ॥

८. सत्रयागः -'प्रजापतिर्वा एष द्वादशधा विहितो यद् द्वादशरात्रो यावतिरात्रौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्यास्स आत्मा प्रजापतिर्वावैष सन्थ्सद्ध वै सत्रेण स्पृणोति प्राणा वै सत्प्राणानेव स्पृणोति सर्वासां वा एते प्रजानां प्राणैरासते ये सत्रमासते' (तै.सं.७.२.९.३६) इति । 'य एवं विद्वांसः सत्रमासते','य एवं विद्वांसः सत्रमुपयन्ति' इत्यादिश्रुतिभिः सत्रयागो विहितः। इदं श्रुत्युक्तं कर्म कलौ निषिद्धम् । तद्यथा- स्मृतिचन्द्रिकायां निर्णयसिन्धौ च कलिवर्ज्यप्रकरणे 'सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम्' इति सत्रयागे दीक्षाया निषेध उक्तः । स्मृतिकौस्तुभे 'सत्रदीक्षा च' इति सत्रदीक्षाया निषेधमुक्त्वा 'दीक्षा निषेधमुखेन सत्रमेव निषिध्यते' इत्युक्तम् । धर्मसिन्धौ 'सत्राख्ययज्ञः कलौ वर्ज्यः' इत्युक्तम् । यदि सत्रदीक्षा यदि वा सत्रयागः स्मृत्या कलौ तयोर्बाधो न युक्तः श्रुतिविधानस्य बलीयस्त्वात् स्मृत्यपेक्षया । अत एव कलिवर्ज्यत्वेन सत्रनिषेधवाक्यानि स्मृत्युक्तानि न प्रमाणानि । अयमपि कलौ सत्रयागनिषेधोऽर्वाचीनकालिक इत्यत्र च विद्यन्तेऽनेकानि गमकानि । प्रथमं तावत् धर्मजिज्ञासाशास्त्रे सन्त्यनेकान्यधिकरणानि सत्रविषयकाणि येषु सत्रयागगतानुष्ठानविशेषाः संशयपूर्वपक्षसिद्धान्तविभागपूर्वकं विस्तरेण विचार्य निर्णीताः सूत्रकारेणाचार्येण जैमिनिना,भाष्यकृताचार्येण शबरस्वामिना वार्तिककारेण कुमारिलभट्टेन च । कलियुगवर्तिनां भाष्यकारादीनां काले कलिवर्ज्यप्रकरणोक्तस्य सत्रयागनिषेधस्य सत्त्वे तैः कृतो विचारो निर्णयश्च व्यर्थप्रयास एव भवति कलौऽननुष्ठेयत्वात् सत्रयागस्य । न तैः सत्रयागस्य कलिवर्ज्यत्वं कुत्रापि सूचितमथवा सत्त्वेऽपि कलिवर्ज्यप्रकरणनिषेधस्य तस्यापरामशदिव स निषेधः शिष्टैः प्रमाणत्वेन न गृहीत इति गम्यते । न च पूर्वयुगविषयत्वेन विचारस्य सार्थक्यम्, संपिपादयिषितस्य धर्मस्य ऐतिह्यमात्रकथनेन निष्प्रयोजनत्वात् । धर्मसंपादनाय प्रवृत्तस्य 'एवंक्रमेण सत्रयागोऽनष्ठीयमान आसीत्' इति ज्ञानं न किञ्चिदप्युपकारकं भवति।

अपि च मनुस्मृतिव्याख्याकारस्य मेधातिथेः कालेऽपि सत्रयागः कलिवर्ज्यत्वेन न निषिद्ध

इति ज्ञायते । तथा हि 'ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः' (मनु. ९.११२) इति मनुस्मृतिश्लोकव्याख्याने पूर्वपक्षिणा सत्रानुष्ठानं दृष्टान्तेनोदाहृतम् 'इयमुद्धारनियोगस्मृतिरतिक्रान्तकालविषया, न त्वद्यत्वेऽनुष्ठेया .... । अनुष्ठेयत्वव्यपदेशो दीर्घसत्रवज्ज्ञानादभ्युदयो यथा स्यादिति । न हि दीर्घसत्रमद्यत्वे केचिदाहरमाणा दृश्यन्ते । अधीयते तु तदुपदेशं ब्राह्मणाः' इत्यादिना । सिद्धान्ते तु 'न हीदं युगभेदेन धर्मव्यवस्थाहेतुः' इत्युक्त्वा दृष्टान्तत्वेनोपात्तो दीर्घसत्रविषय इत्थं परिहृतः - 'दीर्घसत्रेष्वद्यत्वेऽप्यनुष्ठानसंभवः । संवत्सरशब्दस्तु अहःसु प्रथम एव दर्शितः । यत्तु नाद्यत्वे केचिदनुतिष्ठन्तो दृश्यन्ते इति, उपदिष्टार्थस्य नित्यवदाम्नातस्यापि बहुभिः प्रकारैरनुष्ठानसाधनाशक्त्या फलानिच्छया वा नास्तिकतया वा' इति । अस्मिन्मेधातिथिवाक्येऽवधेया विषया इमे - दृष्टान्ते दीर्घसत्रस्यैवोदाहरणाददीर्घकालसत्राणां द्वादशाहसंवत्सरादीनामनुष्ठानं पूर्वपक्षेणापि नासंभावितम् । दीर्घसत्रस्याननुष्ठानवचनेन अल्पकालसत्राणामाहरणमासीदेव तत्काले इति गम्यते । दीर्घसत्रस्याप्यनुष्ठानसंभववचनेन न कश्चिच्छास्त्रीयो निषेधः सत्रविषये तत्काले आसीदिति ज्ञायते । दीर्घसत्रानुष्ठानादर्शने ये हेतवो दर्शिताः तेषु कलिवर्ज्यत्वं नैकतमेन पठितः । अतो तत्काले नासीदेव कलिवर्ज्यप्रकरणसत्रनिषेध इति ज्ञायते ।

अपि च प्रकृतमनुश्लोके यो ज्येष्ठस्योद्धार उपदिष्टः स उद्धारधर्मोऽपि कलिवर्ज्यत्वेन निषिद्धः । किं तु श्लोकव्याख्याने मेधातिथिना कलिवर्ज्यत्वस्यापरामर्शादेव तत्काले सोऽपि निषेधः कलिवर्ज्याख्यो नासीदित्येव गम्यते । पूर्वपक्षमतं तु लोकव्यवहारानुवाद एव न तु कलिवर्ज्यवाक्यप्रमाणावलम्बीत्यन्यदेतत् । व्याकरणमहाभाष्येऽपि पतञ्जलिमुनिभिर्दीर्घसत्र-स्यैवाननुष्ठानत्वमधुनातनकाल इत्युक्तं न पुनरन्येषामल्पकालेऽनुष्ठानयोग्यानां सत्राणामननुष्ठानमुक्तं तैः । 'अप्रयुक्ते दीर्घसत्रवत्' इति वार्तिकस्य विमर्शने महाभाष्यकारा आहुः - 'दीर्घसत्राणि वार्षशतिकानि वार्षसहस्रिकाणि च न चाद्यत्वे व्यवहरति केवलमृषिसम्प्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते' इति । नात्रापि सत्राणां कलियुगनिषेध उक्तः ।

सन्ति त्रिकाण्डमण्डनभास्करमिश्रसोमयाजिकृतापस्तम्बसूत्रध्वनितार्थकारिकाः याभ्योऽपि ज्ञायते अयं सत्रनिषेधोऽत्यर्वाचीनकाले लब्धसत्ताक इति । तासु कारिकासु 'सत्रायागूर्य तत्कर्तुम समर्थस्य विश्वजित् । यद्वा त्रैधातवीया स्यात्सहस्रपशुदक्षिणा' (२.११२) इत्येकाकारिका सत्रविषयिकोप-लभ्यते येन ज्ञायते तस्मिन् काले सत्रयाजिन आसन्निति । सत्रयागानुष्ठानं तत्काले कलिवर्ज्यत्वेन न निषिद्धमिति च । कलिवर्ज्यनिषेधसत्त्वे सत्ययमुपदेशो निरर्थक एव स्यात् । तच्चानिष्टम् । अन्यच्च, एतासु कारिकासु कलिवर्ज्यप्रकरणस्थो यज्ञे गोवधनिषेध उपलभ्यते । पुनरुत्सृष्टपशुविचारप्रकरणे 'वाच्यत्वस्याविशिष्टत्वाच्चोदका- ल्लोकगर्हणात् । कलौ युगे तु गोयागनिषेधाच्च भवेदजः' (१.१२६) इति । अनेनेदमपि ज्ञायते यत् कलिवर्ज्यप्रकरणोक्ता विविधा निषेधाः कालक्रमेण लब्धसत्ताका

अन्यैरन्यैः समनन्तरकालेऽन्योऽन्यो निषेधस्तत्र प्रकरणे निवेशित इति।

अपि चास्ति महत्प्रमाणं कलियुगेऽपि सत्रयागस्यनुष्ठानस्य राज्ञां शिलादिलेखनरूपम्। राजभिः कैश्चित् कलियुगवर्तिभिः क्रिस्तशताब्दानन्तरकालीनैरुट्टङ्कितानि शिलादिलेखनशासनान्यनेकानि सन्त्यद्यापि गोचराणि यत्र तैस्तै राजभिरनुष्ठितयज्ञविशेषाः परामृष्टा येषु सत्राणामप्याहरणं निस्सन्दिग्धं घोषितं वर्तते। उदाह्रियन्ते चात्र कानिचन तादृशलेखनानि-

१. महाराष्ट्रराज्ये नानेघाट् इति स्थाने गुहायामुपरि उट्टङ्कितमिदं लेखनं संस्कृतप्रभावित-प्राकृतभाषया। लेखनस्य केचनांशा अत्र संस्कृतभाषयानूद्य प्रदर्श्यन्ते।(आधारः -'उट्टङ्कित-संस्कृतविद्यारण्य एपिग्राफ् ,अस्य द्वितीयसम्पुटः - पृ.१४५)-

'सिद्धम् ॥ प्रजापतये धर्माय नमः इन्द्राय नमः सङ्कर्षणवासुदेवाभ्यां चन्द्रसूर्याभ्यां महिमवद्भ्यां चतुर्भ्यश्च लोकपालेभ्यो यमवरुणकुबेरवासवेभ्यो नमः। कुमारवरस्य वेदिश्रियः राज्ञः .... दक्षिणापथपतेः .... धनदस्य वेदिश्रियः मात्रा शक्तेः .... नागवरदायिन्या मासोपवासिन्या गृहतापस्या चरितब्रह्मचर्यया दीक्षितव्रतयज्ञशौण्ड्या यज्ञाः हुताः। .... यज्ञैः इष्टम् - अग्न्याधेयः .... राजसूयो यज्ञः .... अश्वमेधो यज्ञः द्वितीयः इष्टः .... गवामयनं यज्ञः इष्टः दक्षिणा दत्ता गावः ११०१। .... गवामयनं यज्ञः दक्षिणा दत्ता। गावः ११००। ..... शतातिरात्रो यज्ञः .... छन्दोगपवमानातिरात्रिः .... अङ्गिरसातिरात्रा यज्ञः इष्टः दक्षिणा .....। अङ्गिरसामयनं षड्वर्ष .... दक्षिणा दत्ता गावः १०००। त्रयोदशरात्रः ..... ॥' इति। यद्यपि लेखनेऽस्मिन् बहूनि पदानि कालेन भक्षितानि, तथापि कानिचन यज्ञनामानि, तेषु यज्ञेषु दत्तायाः दक्षिणायाः विवरणं च क्वचिदद्यापि पठितुं योग्यानि सन्ति। अस्माल्लेखनात् राज्ञः कुमारवरस्य वेदिश्रियः माता तस्य पित्रा सहानेकान् यागाननुष्ठितवतीति ज्ञायते। सत्रयज्ञा अप्यनेके अनुष्ठिता इति च। अस्य राज्ञः कालः क्रिस्तपूर्वं प्रथमशतमानमिति तज्ज्ञैरूहितम् ॥

२. राजस्थानराज्ये उदयपुरप्रान्ते नान्दसाख्ये सरसि स्थिते स्तम्भे लेखनमिदमुपलभ्यते। प्रकृतविषयविशेष एवात्र प्रदर्श्यते -

'.... मालवगणविषयमवतारयित्वैकषष्टिरात्रमतिसत्त्रमपरिमितधर्म्ममात्रं समुद्धृत्य स्वकर्म-सम्पदया विपुलां समुपगतामृद्धिमात्मसिद्धिं वितत्य मायामिव सत्रभूमौ सर्वकामौधधारां वसोर्धारामिव ब्राह्मणाग्निवैश्वानरेषु हुत्वा .... जयसोमपुत्त्रस्य सागिनेतुः श्रीसोमस्यानेकशत-गोसहस्रदक्षिणा। .... महातडाके यूपप्रतिष्ठा कृता ॥' (आधारः- उट्टङ्कित ....- द्वितीयसम्पुटे पृ.३५७) अत्र राज्ञा श्रीसोमेन एकषष्टिरात्रमतिसत्रमनुष्ठितमिति प्रकटितम्। अस्य कालः कृत २८२ तम संवत्सर इति शिलालेखनादवगम्यते। एवं कलियुगारम्भात्सहस्रेषु वर्षेष्वतीतेष्वपि सत्राणामनुष्ठानावगमात्कलौ सत्रदीक्षायाः सत्रयागस्य वा निषेधोऽर्वाचीनकालिक इति ज्ञायते। शिलालेखनानि प्रमाणत्वेनैव गृहीतानि पुरातत्त्वसंशोधकैरितिहासनिर्णयविषये। असत्यां विप्रतिपत्तौ

लेखनगतविषयाणामपि प्रामाण्यमभ्युपगच्छन्ति ऐतिह्यसंशोधकाः।

ननु शिलालेखनानि यान्युदाहृतानि न तानि कलौ सत्रयागस्यानुष्ठितत्वे प्रमाणं भवितुमर्हन्ति। विप्रतिपत्तिदर्शनात्। शास्त्रेण ह्युदाहृतलेखनानि विरुद्ध्यन्ते। सत्रे ब्राह्मणानामेवाधिकार इति शास्त्रम्, 'ये यजमानास्त ऋत्विजः' इति श्रुतेः ब्राह्मणेतरस्यार्त्विज्याभावादिति। तथा च कात्यायनश्रौतसूत्रम्-'सत्राणि ब्राह्मणानामृत्विक् श्रुतेः' (का.श्रौ.सू.१.६.१३) इति। द्वादशलक्षणे षष्ठाध्याये षष्ठपादे सत्रेषु ब्राह्मणानामेवाधिकाराधिकरणे ब्राह्मणानामेव सत्रेऽधिकारः न राजन्यवैश्ययोरिति युक्तिपूर्वकं सिद्धान्तितम्। अधस्तादुदाहृतलेखनद्वये सत्राणि क्षत्रियराजभ्यामनुष्ठितानीति ज्ञायते। अतो शास्त्रविरुद्धत्वादनुष्ठानस्योदहृतशिलालेखनं कलौ सत्रस्यानुष्ठितस्य प्रमाणं न भवतुमर्हतीति चेत्। न, शास्त्राविरोधसत्रानुष्ठानस्यापि शिलालेखनस्योपलभ्यमानत्वात्। तच्च लेखनमित्थम्-

'सिद्धम्॥ महाराजस्य राजातिराजस्य देवपुत्रस्य षाहेर्वासिष्कस्य राज्यसंवत्सरे चतुर्विंशे २० ४ ग्रीष्ममासे चतुर्थे ४ दिवसे त्रिंशे ३० अस्यां पूर्व्वायां रुद्रिलपुत्रेण द्रोणलेन ब्राह्मणेन भारद्वाजसगोत्रेण माणच्छन्दोगेन इष्ट्वा सत्त्रेण द्वादशरात्रेण यूपः प्रतिष्ठापितः। प्रीयन्तामग्नयः'। इति।(आधारः - उट्टङ्कित-संस्कृतविद्यारण्य एपिग्राफ् अस्य द्वितीयसम्पुटः पृष्ठः २३१॥ इदं लेखनं शके चतुर्विंशसंवत्सरे (क्रैस्तानन्तर द्व्यधिकशततमसंवत्सरे) स्तम्भे उट्टङ्कितः। अस्माल्लेखनात् ब्राह्मणेनैव सत्रानुष्ठानं कृतमिति ज्ञायते। अतो न काचिद्विप्रतिपत्तिः शिलालेखनप्रामाण्ये।

ननु लेखनेऽस्मिन्नन्ययजमानानां षोडशानामुल्लेखाभावात्कथमस्य प्रमाणत्वमिति चेत्। न, नास्ति कश्चन शास्त्रविधिः सर्वेषामपि सत्रयाजिनां नामोल्लेखोऽनुष्ठानस्मारकत्वेन प्रतिष्ठापिते शिलायूपे भवेदिति। यस्य तादृशस्मारकयूपप्रतिष्ठापने कामस्स्यात् स तथा कुर्यात्। यस्य नास्ति स कामः स न प्रतिष्ठापयेत्। एवमपि स्यात्। अन्यैः प्रतिष्ठापितानां स्मारकाणां दीर्घकालवशात् नाशस्स्यात्। अथवा येन यूपः प्रतिष्ठापितः स गृहपतिः स्यादन्ये तु सामान्ययजमाना इति। अतो विप्रतिपत्त्यभावाल्लेखनमिदं प्रमाणमेव।

अपि च यदुक्तं सत्रस्य क्षत्रियानुष्ठानपरामर्शादप्रामाण्यं ब्राह्मणानामेव सत्रेऽधिकारादिति तदपि न साधु, क्षत्रियवैश्ययोरपि सत्रेऽधिकारसत्त्वात्। ननु पूर्वमीमांसायां ब्राह्मणानामेव सत्रेऽधिकारो न राजन्यवैश्ययोरिति युक्तिपूर्वकं स्थापितमित्युक्तम्। 'ये यजमानाः त ऋत्विजः' इति श्रुतिश्च दर्शिता। सत्यमुक्तं श्रुतिश्च दर्शिता, तथापि नानया श्रुत्या क्षत्रियवैश्ययोः सत्रे सर्वथाधिकाराभावः प्रापितः। क्षत्रियवैश्ययो ऋत्विक्कर्मण्यधिकराभावात् भवतु सत्रे ऋत्विक्कर्मणि तेषामनधिकारः। अस्ति च सत्रे गृहपतिस्थानमृत्विक्कर्मणोऽन्यत्। नोदाहृतश्रुत्या क्षत्रियवैश्ययोर्गृहपतित्वेऽधिकरो वार्यते। अतः क्षत्रियवैश्ययोर्गृहपतित्वेन सत्रानुष्ठानं न शास्त्रविरुद्धम्। ननु पूर्वमीमांसायां प्रकृताधिकरण एव 'गार्हपते वा स्यातामविप्रतिषेधादि'ति सूत्रेण पूर्वपक्षमुक्त्वा 'न वा कल्पविरोधात्' इति सूत्रेण

क्षत्रियवैश्ययोः सत्रयागे गृहपतित्वेऽपि नास्त्यधिकार इति हेतुपूर्वकं सिद्धान्तितम् । एवं स्थिते कथं राजन्यवैश्ययोर्गृहपतित्वमूलकं सत्रेऽधिकारः सेत्स्यतीति चेत् । न, विप्रतिपत्तिदर्शनात् । याज्ञिका हि मीमांसकेभ्यो विप्रतिपद्यन्तेऽस्मिन्विषये । याज्ञिकानां मतेन नास्ति राजन्यवैश्ययोः गार्हपते पदार्थेऽनधिकारः। न हि याज्ञिका मीमांसकमतमेवान्त्यं प्रमाणं मन्यन्ते । अनुष्ठातॄणां तु तत्तत्कल्पसूत्रकार एव परमं प्रमाणम् । श्रौतसूत्रकाराणामुपदेशो यदि मीमांसकमतेन विरुद्ध्यते तर्हि मीमांसामतस्याग्रहणमेवानुष्ठातृभिः । तथा हि - पूर्वमीमांसाशास्त्रे प्रथमाध्याये तृतीये पादे श्रुतिप्राबल्याधिकरणे औदुम्बर्याः सर्ववेष्टनं श्रुतिविरोधत्वेनाप्रमाणमिति सिद्धान्तितम् । तथापि याज्ञिकाः श्रौतसूत्रकारनिर्देशादौदुम्बर्याः सर्ववेष्टनमेवानुतिष्ठन्ति ।

प्रकृतगृहपतिविषये याज्ञिकानां मतमधुना प्रदर्श्यते । कात्यायनश्रौतसूत्रेषु सत्रेऽधिकार-विषयमधिकृत्य चत्वारि सूत्राणि पठितानि । तद्यथा - सत्राणि ब्राह्मणानामृत्विक्श्रुतेः, एककल्पानामवैगुण्यात्, न परार्थत्वात्, वैश्यराजन्ययोर्गार्हपते (कात्या.श्रौ.सू. १.६. १३, १४, १५, १६) इति । अत्र प्रथमसूत्रेण सत्रे ब्राह्मणानामधिकारः श्रुतिप्रमाणपूर्वकमुक्तः । सा च श्रुतिः 'ये यजमानास्त ऋत्विजः' इति । क्षत्रियवैश्ययोरार्त्विज्येऽधिकाराभावात् सत्रे यजमानैऋत्विक्कर्मकार्यत्वान्न क्षत्रियवैश्ययोः सत्रेऽधिकार इति । अथ द्वितीयसूत्रे सन्देहः । किं समानकल्पानां भिन्नकल्पानां च सहाधिकार उत समानकल्पानामेवेति । अत्र पूर्वः पक्षः - समानकल्पानामेव सत्रेऽधिकारः । राजन्यात्रिवध्र्यश्ववसिष्ठवैश्यशुनकानां कण्वकश्यपसङ्कृतीनां नाराशंसो द्वितीयः प्रयाजः इत्येते समानकल्पाः । तनूनपादितरेषामितीतरे भिन्नकल्पाः । बहूनां यजमानानां सन्निपाते य एव तुल्यकल्पास्त एव सह सत्रमासीरन् । अवैगुण्यात् । इतरथा यस्य यजमानस्य कल्पो नोपसंह्रियते तस्य वैगुण्यं स्यात् । वैगुण्यान्निष्फलत्वम् । अतो समानकल्पानामेव सह सत्रेऽधिकारो न भिन्नकल्पानामिति । अथ 'न, परार्थत्वात्' इति तृतीयसूत्रेण सिद्धान्तयति । नैवं नियन्तुं शक्यते समानकल्पानामेव सह सत्रेऽधिकार इति। भिन्नकल्पानामपि सत्रे सहैवाधिकारः स्यात्। कुतः ? परार्थत्वात् । यज्ञार्थत्वात्कल्पस्य। साधारणत्वाद्यज्ञस्य यस्य कस्यापि यजमानस्य कल्पस्याश्रयणेनेतरेषामपि तेनैव कल्पेन यज्ञः साधितः स्यात् । ननु बहूनां यजमानानां भिन्नकल्पानां सन्निपाते कस्य कल्प आश्रयणीय इति दुर्निर्णय एव स्यात् । न, यो गृहपतिः तस्यैव कल्पस्याश्रयणेनेतरेषां सर्वेषामपि कल्पस्तेनैवाश्रितो भवति । अतो भिन्नकल्पानामपि सत्रे सहाधिकारः सिद्ध इति । अथ चतुर्थं सूत्रम् । अत्र सन्देहः - भिन्नकल्पानामप्यधिकारो सत्रेऽस्तीति निर्णये जाते किं राजन्यवैश्ययोरपि ब्राह्मणैःसहाधिकारो विद्यते उत नेतीति । कुतः सन्देहः ? यतो ब्राह्मणानामेवार्त्विज्यनियमात् सत्रे यजमानानामेवार्त्विज्यविधानात् कथं राजन्यवैश्ययोरधिकार इति संशयः । अस्त्येव राजन्यवैश्ययोरपि ब्राह्मणैः सह सत्रेऽधिकार इति सिद्धान्तः ।

ननूक्तं तयोरार्त्विज्येऽनधिकार इति । सत्यं नास्ति तयोरार्त्विज्येऽधिकारः । परन्तु, अस्ति सत्रे

गृहपतिस्थानमार्त्विज्येनासंकीर्णं यस्मिन्राजन्यवैश्ययोरधिकारः स्यात् । स च गृहपतिः षोडशभ्य ऋत्विग्भ्योऽन्यः । न तस्य ऋत्विकर्मप्रसङ्गे येन श्रुतिविरोधः स्यात्। अतो राजन्यवैश्ययोर्गृहपतिद्वारेण सत्रेऽधिकार इति । एवं स्थिते यदि राजन्यो गृहपतिस्तर्हि पार्थुरश्मेन साम्नैवेतरेषां यजमानानामपि साम साधितं भवति । तथा वैश्यो गृहपतिर्यदि रायोवाजीयेन । चमसकल्पविरोधोऽपि न स्यात्, गृहपतेः पृथक् चमसे सति प्रकृतिसोमयाग इव । तस्मात् राजन्यवैश्ययोरपि सत्रेऽधिकारः सिद्ध इति ।

ननु कर्काचार्यैः कात्यायनश्रौतसूत्राणां व्याख्यातृभिः प्रथमसूत्रं विहायान्यसूत्रत्रयमन्यथैव व्याख्यातम् । तद्यथा- 'एककल्पानामवैगुण्यात्' इति सिद्धान्तत्वेन भिन्नकल्पानां सह सत्रेऽनधिकार इति । तृतीयसूत्रस्य औदुमबरीशाखाविषयत्वेन ह्रस्वदीर्घभिन्नप्रमाणानामपि यजमानानां सत्रेऽधिकार इति । चतुर्थसूत्रस्य तृतीयसूत्रस्थनकारस्यानुषङ्गेण वैश्यराजन्ययोः गार्हपते नाधिकार इति । सत्यमेवं कर्काचार्येण व्याख्यतानि त्रीणि सूत्राणि । तत्तु व्याख्यानं मीमांसकैः सह सन्धिं चिकीर्षन्नविगणय्यैव श्रौतसूत्रकाराणां मतम् । तथा व्याख्यानम् न सूत्रगतपदानामर्थेन सङ्गच्छते इत्यस्मन्मतिः । 'न, परार्थत्वात्' इति तृतीयसूत्रे 'नकारः' पूर्वसूत्रपठितस्यैव विषयस्य निषेधो भवितुमर्हति, न त्वप्रकृतविषयान्तरस्य । तथा तृतीयसूत्रस्थस्य नकारस्य चतुर्थसूत्रेऽनुषङ्गोऽपि न सङ्गच्छते चतुर्थे सूत्रे 'अपि,च' इत्यादिसमुच्चयद्योतकपदस्याभावात् । अतो न तदृजुव्याख्यानम् । अस्मत्कृतव्याख्यानं तु श्रौतसूत्रकारमतेन सङ्गच्छते । तद्यथा - आश्वलायनश्रौतसूत्रेषु द्वादशाध्याये दशमे खण्डे इमानि चत्वारि सूत्राणि पठ्यन्ते प्रकृतविषयकाणि - सर्वे समानगोत्राः स्युरिति गाणगारिः कथं ह्याप्रीसूक्तानि भवेयुः । कथं प्रयाजा इति ॥ १ ॥, अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात् ॥ २ ॥, गृहपतिगोत्रान्वयाविशेषाः ॥ ३ ॥, तस्य राद्धिमनु राद्धिः सर्वेषाम् ॥ ४ ॥ इति । अत्र प्रथमसूत्रेण पूर्वपक्षमतमुच्यते । कथमिति भिन्नगोत्रपक्षस्याक्षेपार्थः प्रश्नः । न कथं चित् भवेयुरित्यर्थः । द्वितीयसूत्रेण सिद्धान्त उच्यते । नानागोत्रा भिन्नकल्पा अपि सत्रमासीरन्निति । तन्त्रशब्देन सर्वपुरुषसाधारणोऽङ्गसमुदाय उच्यते । तस्य च व्यापित्वमस्त्येव। तृतीयसूत्रेणासाधारणपदार्थानां कथमनुष्ठानमिति प्रश्नस्योत्तरमुच्यते । ये विशेषा असाधारणास्ते गृहपतिविधानानुगुणाः कर्तव्या इति । एवं गृहपतिविधानानुगुण्येन सत्रेऽनुष्ठिते, येषां यजमानानां तेन विरोधस्तेषां वैगुण्यात्फलाभाव इति चेत् तन्नेति चतुर्थसूत्रेणोच्यते । गृहपतेः फलसिद्धिमनु सर्वेषां सत्रिणां फलसिद्धिर्भवत्येव 'तन्मुखाः सत्राण्यासते' इति वचनादिति । अत आश्वलायनमतेन भिन्नकल्पानामपि सह सत्रेऽधिकारः सिद्धः ।

एवमेवापस्तम्बश्रौतसूत्रेष्वपि एकविंशतितमप्रश्ने द्वितीयायां कण्डिकायामिमानि सूत्राणि प्रकृतविषयाणि - सर्वे इष्टप्रथमयज्ञाः । अपि वा गृहपतिरेव ॥ १ ॥, गृहपतेरेव परार्थानि यथा यूपाञ्जनमृतुयाज्येति ॥ २ ॥, गृहपतेरेव सामिधेनीयकल्पेनावदानकल्पेनेति प्रक्रामेयुर्यानि

चान्यान्येवंरूपाणि स्युः ॥ ३ ॥, त्वं वरुण इति वसिष्ठराजन्यानां परिधानीया ॥ ४ ॥, आजुहोतेतीतरेषां गोत्राणाम् ॥ ५ ॥, नाराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् ॥ ६ ॥, तनूनपादितरेषां गोत्राणाम् ॥ ७ ॥ इति । प्रथमसूत्रस्य तु सुगमोऽर्थः । द्वितीयसूत्रप्रभृतीनां कपर्दिस्वामिभाष्यमित्थम् '.... परार्थं पर इति यज्ञमाह । यज्ञोपकारीणि यानि न यजमानसंस्काराणि तानि गृहपतिरेव कुर्यात् । एकेनापि कृतो यज्ञोपकारं साधयति । अत्र तूदाहरणम् - यथा यूपस्याञ्जनमेकेनापि गृहपतिना कृतं कृतमिति । यथा ऋतुयाज्या 'गृहपते यजेति' उक्ते गृहपतिना कृतः सर्वेषां यज्ञोपकारं साधयति । यदपि तु स्वार्थं तदन्यद्याजमानसंस्कारं कृत्वा पश्चात्प्रकृतेनैव सम्बध्यते यदि हि क्रतुना सम्बध्यते । अप्रकरणस्थोपि यजमानस्तत्कुर्यात् तत्फलेन च सम्बध्येत इति' इति द्वितीयसूत्रार्थः । अथ तृतीयादिसूत्राणामर्थः - 'गृहपतेरेव सामिधेनीविधिना प्रकुर्युः आहरेयुः सोमे सर्वत्र - यथा पञ्चदशानुब्रूयाद्राजन्यस्य सप्तदशानुब्रूयाद्वैश्यस्येति। क्षत्रियो वैश्यो वा यदि गृहपतिः तस्य कल्पेन सर्वाङ्गेषु सामिधेन्यः क्रियन्ते । यथा बहुषु प्रधानेषु मुख्यतन्त्रेणेतरेषां प्रधानानां सिद्धिः तद्वत् । अवदानकल्पः पञ्चावत्तं जमदग्नीनां चतुरवत्तमितरेषाम् । तत्र गृहपतेरवदानकल्पो यः तेन प्रक्रामेयुः । यानि चान्यान्येवंरूपाणि एवंप्रकाराणि तानि यथा गृहपतेस्तथा प्रक्रामेयुः । उदाहरणबहुत्वमर्थनिर्मलार्थम् । यथा त्वं वरुण इति वसिष्ठराजन्यानां परिधानीया । आजुहोतेतीतरेषां गोत्राणाम्। तत्र या गृहपतेः परिधानीया इतरेषामपि यजमानानां सैवार्थं साधयति । नाराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् । तनूनपादितरेषां गोत्राणामिति । वसिष्ठगोत्राणाम्, येषां चामुष्यायणाः शुनकास्तेषां नाराशंसो द्वितीयः प्रयाजः । यो गृहपतेः प्रयाजः स इतरेषामर्थं साधयति यजमानानाम् । यथा रेतस्सिगुपधानं च । जानुदघ्नं साहस्रं चिन्वीतेत्येवमादिषु यद्गृहपतेस्तेनेतरेषां सिद्धिः । तनूनपादितरेषां गोत्राणाम् - इतरेषां तु गोत्राणां तनूनपाद् द्वितीयः। तत्र गृहपतेस्तनूनपात् इतरेषामपि स एवार्थं साधयति प्रयाजकार्यं क्रत्वर्थम् । अतः पुनर्वचनम् । परिधानीयाकार्यैकत्वाच्च । मीमांसास्थितिः विरुद्धकल्पानामधिकारो नास्ति कर्मवैगुण्यात् । विरुद्धतन्त्राणां प्रधानानां सहप्रयोगो न कर्तव्य इति । येषां प्रत्यक्षश्रुतिर्नास्ति तानि सह प्रयोक्तव्यानीति ।' इति अस्मिन् कपर्दिस्वामिभाष्ये राजन्यवैश्ययोरपि गार्हपत्यधिकारो दर्शितः सामिधेन्युदाहरणेन। मीमांसकेभ्यो विरोधश्चोक्तः याज्ञिकपक्षस्य । अस्ति च गमकान्तरं क्षत्रियवैश्ययोः सत्रेऽधिकारस्य । आश्वलायनश्रौतसूत्रेषु सत्रप्रकरणे 'प्रवरास्त्वावर्तेरन्नावापधर्मित्वात्' (आश्व.श्रौ.सू. १२.१०.५) इति सूत्रं पठित्वा प्रवराणामनुक्रमः पठितः । अन्ते अगस्तीनां पठित्वा 'पुरोहितप्रवरो राज्ञां ॥ अथ यदि सार्ष्टं प्रवृणीरन्मानवैलपौरूरवसेति ॥ इति सत्राणि ॥' (आश्व.श्रौ.सू. १२.१५.४,५,६) इति सूत्राणि पठितानि । एवं सत्रप्रकरणे 'पुरोहितप्रवरो राज्ञाम्' इति क्षत्रियाणां प्रवरोपदेशात् तेषामपि सत्रेऽधिकारो गम्यते । क्षत्रियस्याधिकाराभावे सत्रप्रकरणे राजन्यस्य प्रवरविषयस्य सूत्रद्वयमनुपपन्नं स्यात् । तस्मात्सत्रे विद्यत एव क्षत्रियवैश्ययोरप्यधिकारो गृहपतित्वे इति ।

भवतु क्षत्रियवैश्ययोरपि सत्रेऽधिकारो गृहपतित्वेन तथाप्यस्ति विप्रतिपत्तिः शिलालेखनस्य शास्त्रेण । सत्रे सर्वेषां यजमानत्वात् दक्षिणा न भवति । तथा चापस्तम्बः 'सत्रे तु दाक्षिणौ होमौ हुत्वेदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकाय दक्षिणां नयामीति यजमानाः कृष्णाजिनानि धून्वन्त उदञ्चो दक्षिणापथेनातियन्ति' (आप.श्रौ.सू.२१.५.१०) इति । उदाहृतशिलालेखनद्वये 'गवामयनं यज्ञः इष्टः 'दक्षिणा दत्ता गावः १००१, , 'अङ्गिरसामयनं षड्वर्ष ... दक्षिणा दत्ता गावः १०००', 'अनेकशतगोसहस्रदक्षिणा' इत्यादिना दक्षिणादानस्योल्लेखो दृश्यते । एवं सति कथं सत्रस्य शास्त्रीयत्वम् इति चेत् । न, यद्यपि सत्रे दक्षिणाकाले दक्षिणा न दीयते किन्तु सूत्रोक्तप्रकारेण दक्षिणापथेन गमनं यजमानानां तथापि सर्वेषां सत्रिणां सत्रान्ते पृष्ठशमनीयो यागः श्रुत्या विहितः 'सत्रादुदवसाय दक्षिणावता पृष्ठशमनीयेन यजेरन्त्सत्रिणः' इति । तथा चापस्तम्बः - 'उदवसानीययेष्ट्वान्यानृत्विजो वृत्वा पृष्ठशमनीयेन यजन्ते ज्योतिष्टोमेनाग्निष्टोमेन सहस्रदक्षिणेन' (आप.श्रौ.सू. २१.१३.५) इति । अस्य कपर्दिभाष्यम् - 'पृष्ठशमनीयो ज्योतिष्टोमसंस्थः सहस्रदक्षिणा च नियता। ... अदक्षिणे हि सत्रे अशान्तानि पृष्ठानि । तेषां शमनार्थं पृष्ठशमनीयः । अहीनस्य तु दक्षिणावत्वात्पृष्ठशमनीयनिवृत्तिः' इति । आश्वलायनश्रौतसूत्रेष्वप्ययं विधिरुपलभ्यते - 'तान्यदक्षिणानि । तेषामन्ते ज्योतिष्टोमः । पृष्ठ्यशमनीयः सहस्रदक्षिणः । अन्यो वा प्रज्ञातदक्षिणः । दक्षिणावता पृष्ठ्यानि शमयेरन्निति विज्ञायते ।' (आश्व.श्रौ.सू. १२.१५.७ तः ११) इति सूत्राणि । अस्य नारायणवृत्तिः - 'तानि सत्राण्यदक्षिणानि भवन्ति । ... तेषां सत्राणामन्ते ज्योतिष्टोमः । .... सत्रादुदवसायैषामन्यतमेन क्रतुना सर्वे सत्रिणः पृथक् पृथग्यजेरन् स्वकीयैरेवर्त्विग्भिः । ... अन्यो ज्योतिष्टोमात्पृष्ठ्यशमनीयः कर्तव्यः इति । अतः शिलालेखनयोर्यो दक्षिणापरामर्शः स पृष्ठ्यशमनीययागे दत्तदक्षिणायाः । अतो न दक्षिणोल्लेखाच्छिलालेखनस्य शास्त्रवैरुध्यम् । तस्मात् 'सत्रस्य क्षत्रियेणानुष्ठानपरामर्शात् शिलालेखनस्य शास्त्रेण विप्रतिपत्तिरतो न तल्लेखनं प्रमाणं स्यात्' इति यदुक्तं तदसाध्विति सिद्धं क्षत्रियस्यापि सत्रे गृहपतित्वेनाधिकारस्य सिद्धिदर्शनात् । अतः सत्रस्य कलिवर्ज्यत्वं न प्रमाणमिति स्थितम् ।

कलौ सत्रयागस्य निषेधवाक्यस्याप्रामाण्यमन्येन हेतुनापि वक्ष्यमाणेन सिध्यति । अस्ति पराशरस्मृतिः । 'कलौ पाराशराः स्मृताः' (पारा.स्मृ.१.२४) इति पराशरस्मृतेः कलियुगे विशेषप्रामाण्यमितरस्मृत्यपेक्षया । कलियुगधर्मान्विशेषेण विधातुं प्रवृत्तायामस्यां पराशरस्मृतावाशौचप्रकरणे 'सव्रतो सत्रपूतश्चाहिताग्निश्च यो द्विजः । राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः' (३.२३) इति श्लोकेन सत्रपूतस्याशौचाभावो दर्शितः । कलौ सत्रयागस्य निषेधस्य प्रामाण्ये सति सत्रयज्ञेन पूतस्यात्रोपदिष्टस्याशोचाभावो निरर्थकः स्यात् । अतो सत्रविषये कलिवर्ज्यनिषेधोऽप्रमाणमेव भवति ।

९. अश्वमेधः - 'योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः

सर्वस्य भेषजं सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन् सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' (तै.सं.५.३.१२.४७,४८) इति तैत्तिरीयश्रुतावश्वमेधस्यार्थवादपूर्वको विधिः । सर्वेषां पापानां निकृष्टतमा ब्रह्महत्यापि अश्वमेधेनापनुद्यत इतीदं कर्म सर्वकर्मभ्योऽप्युत्कृष्टतमम् । क्रतुराडिति विख्यातोऽयं यज्ञः श्रुत्युक्तोऽपि कलिवर्ज्यत्वेन निषिद्धः । स्मृतिचन्द्रिकायां कलिवर्ज्यप्रकरणे आदिपुराणोक्तित्वेन 'नराश्वमेधौ मद्यं च कलौ वर्ज्या द्विजातिभिः' इति विषयान्तरैः सहाश्वमेधो कलौ निषिद्धः । निर्णयसिन्धावप्ययं श्लोकार्धः पठितः 'वर्ज्याः' इति स्थाने 'वर्ज्यम्' इति पाठान्तरेण । स्मृतिकौस्तुभे स्मृत्यर्थसारोक्तकलिवर्ज्यानामुदाहरणेन 'दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ । कलौ युगे त्विमान्धर्मान्विवर्ज्यानाहुर्मनीषिणः' इति श्लोकेनाश्वमेधस्य निषेध उक्तः । नारदीयपुराणे पूर्वार्धे च 'नैष्ठिकं ब्रह्मचर्यं च नरमेधाश्वमेधकौ' इत्युक्त्याश्वमेधो निषिद्धः ।

नायं निषेधः प्रमाणं स्याच्छ्रुतेर्बलीयस्त्वात्स्मृतेः । अयमपि निषेधोऽर्वाचीनकालीन इति गम्यते । पूर्वमीमांसायां सन्त्यनेकान्यधिकरणानि यत्राश्वमेधयागधर्माः विचारिताः । भाष्यकारकाले यदि निषेधोऽभविष्यत्तर्हि भाष्यकृत आयासो वृथा स्यान्निष्प्रयोजनत्वाद्विचारस्याशक्यानुष्ठानपक्षे । नापि विचारे कलिवर्ज्यत्वपरामर्शो विद्यते । अतः पूर्वमीमांसाभाष्यकारादनन्तरकाले निषेधोऽयमाविष्कृत इति गम्यते ।

अयं निषेधो बृहदारण्यकोपनिषद्भाष्यकारस्य पूज्यभगवत्पादस्य शङ्कराचार्यस्य कालादप्यर्वाचीनः । शङ्कराचार्यकृतभाष्ये ह्येवं परामृष्टोऽश्वमेधः - 'अस्य त्वश्वमेधकर्मसम्बन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः । ... 'सर्वेषां च कर्मणां परं कर्माश्वमेधः समष्टिव्यष्टिप्राप्तिफलत्वात्' (बृ.भा.१.१.१) इति । 'समष्टिव्यष्टिफलश्चाश्वमेधक्रतुः ज्ञानसमुच्चितो वा केवलज्ञानसंपादितो वा, सर्वकर्मणां पराकाष्ठा । 'भ्रूणहत्याश्वमेधाभ्यां न परं पुण्यपापयोः' इति हि स्मरन्ति । तेन हि समष्टिं व्यष्टीश्च प्राप्नोति । तत्र व्यष्टयो निर्ज्ञाता अन्तरङ्गविषया अश्वमेधयागफलभूताः' (बृ.भा.३.३.१) इति च । एवमश्वमेधस्य फलकथनपूर्वकमुत्कृष्टत्वकथनं नोपपन्नं भवति सति प्रतिषेधवाक्येऽचार्यगोचरे । भाष्यस्य टीकाकारस्य आनन्दज्ञानस्यापि कालेऽयं निषेधो न लब्धसत्ताक इति गम्यते । तथा हि 'येषामश्वमेधे नाधिकारः' इति भाष्यस्य टीका - 'राजयज्ञत्वादश्वमेधस्य तदनधिकारिणामपि ब्राह्मणादीनां तत्फलार्थिनाम्' इति । कलियुगनिषेधवाक्यस्य सत्त्वे प्रमाणत्वे वा राजन्यस्याधिकारोक्तिर्ब्राह्मणादीनामनधिकारोक्तिश्च नोपपन्नं स्यात्, सर्वेषां कलियुगवर्तिनामविशेषेणाधिकाराभावात् कलौ निषेधात् । अतोऽत्यर्वा-चीनोऽयं निषेधोऽप्रामाणिकः ।

अन्यच्च । 'तस्मात्साभिसन्धीनां नित्यानां कर्मणां सर्वमेधाश्वमेधादीनां च ब्रह्मत्वादीनि फलानि' (बृ.भा.३.३.१) इति बृहदारण्यकशाङ्करभाष्यादश्वमेधस्य नित्यकर्मत्वं ज्ञायते ।

अश्वमेधस्य नित्यकर्मत्वात्तस्य प्रतिषेधोऽप्रमाणमेव स्यात् । बृहदारण्यकोपनिषद्भाष्यवार्तिकेऽपि श्रुतौ विहितस्याश्वमेधोपासनस्याधिकारिविषये 'येषामनधिकारोऽत्र ह्यश्वमेधक्रतौ भवेत् । इत एव तु विज्ञानात्तेषां तत्फलकीर्तनम्' (बृ.वा.१.१.१११८) इति श्लोकः पठितः । श्लोके येषामनधिकार इति प्रयोगेण सन्त्यन्येऽधिकृता अश्वमेधक्रताविति गम्यते । अतः वार्तिककाराणां सुरेश्वराचार्याणां काले कलिवर्ज्यप्रयुक्तनिषेधो नासीदिति गम्यते । यदि हि तेषां काले कलिवर्ज्यनिषेधविषयोऽश्वमेधोऽभविष्यत्तर्हि वार्तिके वक्ष्यमाणप्रकारेणैव श्लोका अभविष्यन् । तद्यथा - 'अधिकारो न कस्याप्यश्वमेधक्रतौ भवेत् । कलौ तस्य निषिद्धत्वाद्युगारम्भे महात्मभिः ॥ ब्रह्मक्षत्रियवैश्यानां त्रयाणामपि वर्णिनाम् । उपास्तौ त्वधिकारः स्यान्न स केनापि वार्यते ॥ सामान्येन निषिद्धत्वाद्ध्यानस्यापि ह्युतिर्यदि । श्रुतेः स्वाध्यायमात्रत्वाद्गुरोर्यत्नो निरर्थकः ॥ न तद्युक्तं यतस्तस्मात्कलौ ध्यानस्य न ह्युतिः । क्रतावेव निषेधोक्तिर्न ध्यान इति निश्चितिः ॥' इति । परन्तु नैतदर्थाः श्लोका उपलभ्यन्ते वार्तिके । अतो न तेषां कालेऽश्वमेधस्य निषेध आसीदिति गम्यते ।

किञ्च, त्रिकाण्डमण्डनापस्तम्बसूत्रध्वनितकारिकास्वश्वमेधविषयकः श्लोकः पठ्यते - 'अश्वमेधादिके यज्ञे महापातकनाशने । पतितस्याऽधिकारोऽस्मिन्प्रत्युतानुगुणो भवेत्' (१.१४६) इति । अतो ज्ञायते त्रिकाण्डमण्डनकालेऽपि नासीदयमश्वमेधनिषेध इति । तस्मात् अश्वमेधस्य कलिवर्ज्यप्रकरणेन निषेधोऽप्रामाणिक एवेति स्थितम् ।

किञ्चान्यत् । सन्ति चानेकानि शिलालेखनानि येष्वश्वमेधक्रतोरनुष्ठानं नाना राजभिः प्रकटितानि । कानिचनात्रोदाह्रियन्ते उट्टङ्कित-संस्कृतविद्यारण्य - एपिग्राफिक्स् नामकाद्ग्रन्थात् ।

१. 'कोसलाधिपेन द्विरश्वमेधयाजिनः सेनापतेः पुष्यमित्रस्य षष्ठेन कौशिकीपुत्रेण धन(देवेन) धर्मराज्ञा पितुः फल्गुदेवस्य केतनं कारितम्, (द्वितीय संपुटे १६७ पृष्टे) इति । अस्य लेखनस्य कालः क्रैस्तानन्तरप्रथमशतकमिति लिखितमाधारग्रन्थे ।

२. 'सिद्धम् । नमो भगवते महादेवस्य पुष्पभद्रस्वामिनः । महाराजस्य वासिष्ठीपुत्रस्य श्येहवलचन्तमूलस्य संव १० ६ गि प २ दिव ५ । राज्ञो वसिष्ठीपुत्रस्य अग्निष्टोमवाजपेयाश्वमेधबहुसुवर्ण्णकयाजिनः नैकहिरण्यकोटिप्रदातुः गोशतसहस्रहलशतसहस्रप्रदातुः .... इक्ष्वाकूणां श्री वीरपुरुषदत्तेन ....' (द्वितीयसंपुटे ४३७ पृष्टे ) इति । अस्य कालः क्रैस्तानन्तरः २९६ तमसंवत्सरः ।

३. '.... के आश्ववातायनीपुत्रस्य देवीमित्रस्य अश्वमेध' ( द्वि.सं. १२७ पृष्टे) इति । इदं लेखनं प्राकृतभाषया इष्टकायां लिखितम् । कालस्तु क्रैस्तपूर्वप्रथमशतकः ।

४. '... स्य दाममित्रस्य अश्वमेधे' (द्वि.सं. २२२ पृष्टे) इति । इदं लेखनं प्राकृतभाषया इष्टकायां लिखितम् ।

५. 'कारितोऽयं राज्ञा भागवतेन गाजायनेन पाराशरीपुत्रेण सर्वतातेन अश्वमेधयाजिना भगवद्भ्यां सङ्कर्षणवासुदेवाभ्यां अनिहताभ्यां सर्वेश्वराभ्यां पूजाशिलाप्रकारो नारायणवाटकः'॥ (द्वि.सं. १२५

पृष्ठे) इदं कूपे लिखितम्, काल: क्रैस्तपूर्वप्रथमशतके अपरार्ध: ।

६. '.... कुमारवरस्य वेदश्रियो राज्ञ: मात्रा .... (राज्ञ श्रीसातकर्णिना सह) यज्ञै: इष्टम्। .... अश्वमेधो यज्ञ: द्वितीय: इष्ट: दक्षिणा दत्ता अश्व: रोप्यालङ्कार: १ सुवर्णालङ्कार: १२ दक्षिणा दत्ता कार्षापणानि १४००० ग्राम: १ ....' (द्वि. सं. १४५ पृष्ठे) । इदं लेखनं माहाराष्ट्रराज्ये नानाघाट्स्थाने गुहाया उपरि दृश्यते । काल: क्रिस्तपूर्वप्रथमशतकान्त: ।

७. 'सिद्धं । ओं युगेश्वरस्याश्वमेधे युगशैलमहीपते: इष्टका वार्षगण्यस्य नृपतेश्शीलवर्मण:, 'नृपतेर्वार्षिगण्यस्य पोणषष्ठस्य धीमत: चतुर्थस्याश्वमेधस्य चित्योऽयं शीलवर्मण:' इति लेखनद्वयं पृथक्पृथगिष्टकायामुपलभ्यते । इष्टके उत्तराखण्डराज्ये देहरादून् प्रान्ते लब्धे । काल: क्रिस्तानन्तर: पञ्चविंशत्युत्तर-शतत्रयततमसंवत्सर: । (तृतीयसंपुटे ७ पृष्ठे) ।

८. 'सिद्धम् ॥ काञ्चीपुरात् अग्निष्टोमवाजपेयाश्वमेधयाजी धर्ममहाधिराज: भारद्वाज: पल्लवानां शिवस्कन्दवर्मा अस्माकं विषये सर्वत्र ....' इति ताम्रपत्रशासनमिदं प्राकृतभाषया लिखितम् । अष्टात्रिंशदुत्तरशतत्रयतमसंवत्सर: क्रिस्तानन्तरोऽस्यकाल: । (तृतीयसम्पुटे २१ तमपृष्ठे) ।

९. 'सिद्धम् । स्वस्ति नन्दिवर्धनात् । अग्निष्टोमाप्तोर्यामोक्थ्यषोडश्यतिरात्रवाजपेय-बृहस्पतिसवसाद्यस्क्रचतुरश्वमेधयाजिन: विष्णुवृद्धसगोत्रस्य सम्राजो वाकाटकानाम्महाराजश्रीप्रवर-सेनस्य सूनो: .... पराक्रमाधिगत भागीरथ्यामलजलमूर्धाभिषिक्तनां दशाश्वमेधावभृथस्नातानां भारशिवानां .... वंकाटकानां परममाहेश्वरमहाराज श्री प्रवरसेनस्य वचनात् ।' इति (तृतीयसम्पुटे १३१ पृष्ठे) महाराष्ट्ररज्ये वार्धप्रान्ते जाम्बक्षेत्रे लब्धताम्रशासनमिदं क्रिस्तानन्तर-द्वाविंशत्युत्तरशतचतुष्टयसंवत्सरकालीनम् ।

१०. 'स्वस्ति । शकवर्षेषु चतुश्शतेषु पञ्चषष्ट्युतेषु अश्वमेधादियज्ञानां यज्वा श्रौतविधानत:। हिरण्यगर्भसम्भूतश्चलिक्यो वल्लभेश्वर: ....' इति।(तृतीयसम्पुटे ३९९ पृष्ठे) कर्णाटकराज्ये बीजापुरप्रान्ते पर्वतस्थे बट्टरप्पदेवालये दृश्यते इदं लेखनं क्रिस्ताब्दषट्शतककालीनम्।

११. 'स्वस्ति स्वामिमहासेनमातृगणानुध्याताभिषिक्तानाम् मानव्यसगोत्राणां हारितीपुत्राणाम् अग्निष्टोमाग्निचयनवाजपेयबहुसुवर्णपौण्डरीकाश्वमेधावभृथस्नानपवित्रीकृतशरीरस्य विक्रमधर्म्म-महाराजस्य प्रियतनय: कलि अरसनामधेय: ......' (तृतीयसम्पुटे - ४६७ पृष्ठे) इदं ताम्रपत्रलेखनं क्रिस्तानन्तरषष्ठशतकस्य ।

१२. 'स्वस्ति । जितम्भगवता गतघनगगनाभेन पद्मनाभेन । श्रीमज्जाह्नवेयकुला-मलव्योमावभासमानभास्करस्य .... काण्वायनसगोत्रस्य श्रीमत्कोङ्गणिवर्म्मधर्म्ममहाधिराजस्य पुत्रस्य .... कलियुगबलपङ्कावसन्नधर्मवृषोद्धरणनित्यसन्नद्धस्य श्रीमन्माधवमहाधिराजस्य पुत्रस्याविच्छिन्नाश्वमेधावभृथाभिषिक्तश्रीमत्कदम्बकुलगगनगभस्तिमालिन: ....' ( चतुर्थे सम्पुटे प्रथमभागे - १०५ तमपृष्ठे) । ताम्रशासनलेखनमिदं क्रिस्तानन्तरषष्ठशतमानकालीनम् । अत्र

'कलियुगबलः ...' इति शब्दप्रयोगेण कलिवर्ज्यप्रकरणोक्ताश्वमेधनिषेधस्य गन्धमात्रोऽपि नासीत्तस्मिन्काले इति ज्ञायते ।

एवमेवानेकानि शिलादिलेखनानि सन्ति कलियुगेऽनुष्ठिताश्वमेधयागस्य परामर्शकानि प्रमाणानि । अतोऽत्यर्वाचीनमिदं कलिवर्ज्यप्रकरणं कलिमहिम्नैव लब्धसत्ताकमप्रमाणं चेति ॥

**१०. पुरुषमेधः** - 'ब्रह्मणे ब्राह्मणमालभते । क्षत्राय राजन्यम् । मरुद्भ्यो वैश्यम् । तपसे शूद्रम् । ....कृताय सभाविनम् । त्रेताया आदिनवदर्शम् । द्वापराय बहिष्सदम् । कलये सभास्थाणुम् ..... प्रतीक्षायै कुमारीम्' ( तै.ब्रा. ३.४.१ तः १९) इति पुरुषमेधे मनुष्यरूपाणां पशूनां विधानं तैत्तिरीये श्रूयते ।

'पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयं सर्वाणि भूतानि । अहमेवेदं सर्वं स्यामिति । स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् । तमाहरत् । तेनायजत । तेनेष्ट्वा अत्यतिष्ठत् सर्वाणि भूतानि । इदं सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानि । इदं सर्वं भवति । य एवं विद्वान् पुरुषमेधेन यजते । यो वा एतदेवं वेद ॥' (श.ब्रा.(मा.) १३.६.१.१) इति शतपथब्राह्मणेऽस्य क्रतोर्विधिः श्रूयते । 'स वा एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति । .... तदेनेन सर्वमाप्नोति' (तत्रैव सप्तम्यां कण्डिकायाम्) 'ब्रह्मणे ब्राह्मणमालभते .... एवमेता देवता यथारूपं पशुभिः समर्धयति । ता एनं समृद्धाः समर्धयन्ति सर्वैः कामैः' (१३.६.२.१०); 'नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेन अभिष्टौति सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् इत्यनेन षोडशर्चेन । षोडशकलं वा इदं सर्वम् । सर्वं पुरुषमेधः। सर्वस्याप्त्यै । सर्वस्यावरुद्धयै । इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महत्येव' (१३.६.२.१२)'अथ हैनं वागभ्युवाद पुरुष मा सन्तिष्ठिपः । यदि संस्थापयिष्यसि । पुरुष एव पुरुषमत्स्यसीतीति । तान् पर्यग्निकृतानेवोदसृजत् । तद्देवत्या आहुतिरजुहोत् । ताभिस्ता देवता अप्रीणात् । ता एनं प्रीता अप्रीणन् सर्वैः कामैः' (१३-६.२.१३) इति पुरुषमेधस्य विस्तरेण विधानं शतपथब्राह्मण उपलभ्यते ।

तमेतं महान्तं यज्ञं नारायणाख्यस्य विराट्पुरुषस्याराधनरूपं कलिवर्ज्यप्रकरणेन निषिद्धम् । निबन्धनग्रन्थेष्वश्वमेधनिषेधेन सहैवास्यापि निषेध उक्तः । निषेधवाक्यानि प्रागेव अश्वमेधविषये प्रदर्शितानि । एवं प्रकारैर्वाक्यैः श्रुत्युक्तकर्मणो निषेधः सर्वथाप्ययुक्तोऽप्रमाणं च भवति श्रुतेर्बलीयस्त्वात्स्मृतेः ।

अस्य शतपथब्राह्मणभागस्य व्याख्यानमवन्तिनाथस्य विक्रमार्कस्य भूपतेर्धर्माध्यक्षो हरिस्वामी यः तेन कृतः । नैतस्मिन् व्याख्यातभागेऽस्य यज्ञस्य कलिवर्ज्यत्वमुपलभ्यते । अतो गम्यतेऽयं निषेधो विक्रमार्कस्य कालादत्यर्वाचीनकालीन इति । अपि चापस्तम्बश्रौतसूत्रेष्वयं यज्ञो विहितः - 'पञ्चाहः पुरुषमेधः । ब्राह्मणो राजन्यो वा यजेत । ओजो वीर्यमाप्नोति सर्वा व्युष्टीर्व्यश्नुते' (आप.श्रौ.सू.२०.२४.१,२,३) इत्यादिना। एतेषां सूत्राणां

कपर्दिभाष्यमित्थम् - 'अश्वमेधे यदप्राप्तं तत्प्राप्नोतीति विज्ञायते । प्रजापतिरश्वमेधेनेष्ट्वा पुरुषमेधमप्यमन्यत । तस्य यदनाप्तमासीदश्वमेधेन आप्नोति तथैवैतद्यजमानः यत्पुरुषमेधेन यजते । यदनाप्तमश्वमेधेन तत्सर्वं पुरुषमेधेनाप्नोतीति फलवादः' इति । एवंमहिमवतः क्रतोरपि कलिवर्ज्येन निषेधस्त्वन्याय्य एव । न कुत्रापि कपर्दिस्मामिकृतभाष्येऽस्य क्रतोः कलौ निषेधवचनमुपलभ्यते । अतो गम्यते न तत्कालेऽपि कलिवर्ज्यप्रकरणस्य सत्तासीदिति । तस्माच्छ्रुत्युक्तस्य पुरुषमेधस्यातिशयफलप्रदस्यात्यर्वाचीनकलिवर्ज्यप्रकरणेन निषेधोऽप्रमाणमेवेति स्थितम् ॥

११. राजसूयः 'राजसूयेन स्वाराज्यकामो यजेत' (शाबरभाष्यम् जै.सू. ११.२.१२) इति राजसूययज्ञस्य श्रुत्युक्तो विधिः । तैत्तिरीये शतपथब्राह्मणे च विस्तरेण राजसूययागस्येति कर्तव्यतोपदिष्टा (तै.ब्रा.१.६,७,८; श.ब्रा.(मा) ५.२.३ तः ५.५.५, ९.३.४.८ इत्यादि) । श्रुत्युक्तस्याप्यस्य कर्मणः कलिवर्ज्यप्रकरणे निषेध उक्तः । तथा च हेमाद्रिकृतचतुर्वर्ग चिन्तामणौ दानखण्डे अष्टमाध्याये गरुडपुराणवचनमित्युदाहृतमिदं राजसूययागस्य कलौ निषेधवाक्यम् - 'गर्हितं सप्तकं ह्येतत् राजसूयं कमण्डलुः' इति ।

अयमपि स्मृत्युक्तो निषेधः श्रुत्युक्तकर्मण राजसूययागस्याप्रमाणमेव स्यात् । श्रुतेर्बलीयस्त्वात्स्मृतेः। निषेधश्चायमर्वाक्कालीनो यतो कलियुगवर्तिनः प्रख्यातशिष्टाः न केवलमिमं निषेधं स्वग्रन्थेषु नोल्लिखितवन्तः किन्तु राजसूयस्यानुष्ठानसम्भवमेवोक्तवन्तः । तद्यथा - पूर्वमीमांसायां सन्त्य-नेकान्यधिकरणानि राजसूयविषयाणि यान्यधिकृत्य तद्भाष्यकारेण राजसूययागस्येतिकर्तव्यताविषया अनेके विस्तरेण विचिन्त्य निर्णीताः । कलिवर्ज्यस्यास्तित्वे, तस्य प्रमाणत्वेन ग्रहणे वा भाष्यकारस्याचार्यस्य शबरस्वामिनः प्रयासो निरर्थक एव स्यात् । तथा च वार्तिककारस्य भट्टकुमारिलस्य वचनानि व्यर्थानि स्युः । राजसूयस्य कलौ निषेधोऽणुमात्रेणापि नाघ्रातो भाष्ये वार्तिके वा ।

शङ्करभगवत्पादाचार्या अपि राजसूयस्यानुष्ठानं सम्भावयन्तो वदन्ति देवताधिकरणभाष्ये- 'यस्तु ब्रूयात् इदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत् । इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्, ततश्च राजसूयादिचोदना उपरुन्ध्यात्' (सू.भा. १.३.३३) इति । अनेन शङ्कराचार्याणां कालेऽपि कलियुगे न राजसूयस्योपरोधः कलिवर्ज्यादिरूपोऽन्यो वासीदिति ज्ञायते, राजसूयादि- श्रुतिचोदनानामुपरोधो न तेषामिष्टमिति च । अपि च बृहदारण्यकोपनिषदि श्रूयते - 'तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्, (बृ.१.४.११) इति । शङ्करभगवत्पादाचार्याः स्वकीये भाष्येऽपि यथैव श्रुतौ वर्तमानापदेशत्वेनेदं वाक्यं पठितं तथैव वर्तमानापदेशेनैव विवरणं कृतवन्तो

न त्वैतिह्यद्योतकभूतकालवचनेन । अनेनापि ज्ञायते तेषां काले नासीदेव राजसूयस्य निषेध इति । एवमेव बृहदारण्यकोपनिषद्भाष्यवार्तिकेऽपि राजसूयविवरणप्रकरणे न कुत्रापि कलिवर्ज्यनिषेधोऽस्य यज्ञस्योपलभ्यते । अतो राजसूयस्य कलिवर्ज्यनिषेधोऽर्वाचीनाविष्कारः सन्नप्रामाणमेवेति स्पष्टम् ।

न च कलियुगे राजसूयस्यानुष्ठानाभावो यतोऽस्ति प्रमाणमत्र शिलालेखनरूपं राजसूययागस्यानुष्ठितस्य । महाराष्ट्रराज्ये पुणेक्षेत्रे नानेघाटाख्यपर्वतश्रेणिप्रदेशे गुहायामुपरि लेखनमिदमुपलभ्यते । (प्रकृतांशा एवात्रोदाह्रियन्ते) - 'प्रजापतये धर्माय नमः सङ्कर्षणवासुदेवाभ्यां चन्द्रसूर्याभ्यां महिमवद्भ्यां चतुर्भ्यश्च लोकपालेभ्यो यमवरुणकुबेरवासवेभ्यो नमः । कुमारवरस्य वेदिश्रियो राज्ञः .... धनदस्य वेदिश्रियः मात्रा .... राजाश्रीसातकर्णिना सह यज्ञैः इष्टम् । .... राजसूयो यज्ञः ...' (आधारः -उट्टङ्कित-संस्कृतविद्यारण्य-एपिग्राफिक्स् - द्वितीयसम्पुटे- १४५ पष्ठे) । अस्य लेखनस्य कालः क्रिस्तशतकस्यारम्भ इति तज्ज्ञैरूहितः । तस्माच्छिष्टैरनाघ्रातोऽयं राजसूयनिषेधोऽप्रमाणमेव भवितुमर्हति श्रुतिचोदितत्वात्, शिष्टानां राजसूयस्यानुष्ठानस्य सम्भावनोक्तेः, राजसूयस्यानुष्ठितत्वाच्च राजभिः कलियुगवर्तिभिः ।

१२. पशुयागः - 'य एवमैन्द्राग्नं पशुं षष्ठे षष्ठे मास आलभते' (गोपथब्राह्मणम् - २.२.१)'वायव्यं श्वेतमालभेत भूतिकामः' (तै. सं. २.१.१.१) इत्यादिश्रुतिवाक्यैः पशुयागो विहितः । कलियुगेऽस्य श्रुतिविहितस्य पशुयागस्य 'पशुः कलौ न कर्तव्य इत्याह भगवान् भृगुः' इति मार्कण्डेयवचनेन निषेध उपदिष्टः । मार्कण्डेयवचनं चापरार्ककृतयाज्ञवल्क्यस्मृतिव्याख्याने (१.१५६) उदाहृतम् । यद्यपि भृगुवचनं मार्कण्डेयेन मधुपर्के गोवधनिषेधप्रसङ्गे 'माधुपर्किकपश्वर्थे ततो मात्रां निवेदयेत् । सहिरण्यं बीजपात्रं द्रविणेन सदैव तु ॥ पशुः कलौ न कर्तव्य इत्याह भगवान् भृगुः' इति पठितं तथापि 'पशुः कलौ न कर्तव्यः' इति सामान्यनिषेधादेव सर्वेषु क्रतुषु अजादिप्राणिसामान्यस्य हिंसा कलियुगे निषिद्धेति केचित्। इमं निषेधं प्रमाणत्वेन स्वीकृत्य केचनाधुनातनानुष्ठातारो यज्ञे पशुमारणं न कुर्वन्ति । पशुस्थाने पिष्टकृतपशुं वा घृतं वा हविष्ट्वेन प्रतिनिदधति । अन्येऽनुष्ठातारो भृगुवचनस्य मधुपर्कमात्रविषयत्वेन स्वीकृत्य यज्ञेषु पशुमारणान्न निवृत्ताः । कलौ पशुनिषेधोऽयं न कलिवर्ज्यप्रकरणे निबन्धनेषु पठितो यथाश्वमेधादिः । तस्मादपि कारणात् केचन यज्ञेषु पशुं संज्ञपयन्ति । भवत्विदमनुष्ठानं यथामत्यनुष्ठातॄणां वयं तु पश्यामोऽयं पशुहिंसानिषेधः श्रौतकर्मण्यप्रमाणमेव भवेदिति । न हि स्मृतिवचनं श्रुतिविहितं बाधितुमलं श्रुतेर्बलीयस्त्वात्स्मृतेः । भवतु काममस्य निषेधस्य प्रामाण्यं स्मृत्युक्तविषयेषु, श्रुत्युक्तविषयेषु त्वयं निषेधः कुण्ठीभवति । स्मृत्युक्तविषयेऽपि केचन पशुनिषेधं न सहन्ते । तद्यथा - विश्वनाथः स्वविरचिते मांसतत्त्वविवेकग्रन्थ आह - 'ये तु कलिवर्ज्यतया मांसश्राद्धे विवदन्ते स्तेयान्यमहापातकनिष्कृतिरिति कलिवर्ज्यतयोक्तमपि ब्रह्महत्यातत्संसर्गप्रायश्चित्तं धनलोभादुपदिशन्ति मातृसपिण्डानयने च न विवदन्ते रागद्वेषदूषितचेतसो

देवानांप्रियास्ते केन शिक्षणीया इत्यलं मांसविद्विषद्भिः सौगतमतानुसारिभिः सह श्रमेणेति' इति ।

१३. **मुखाग्निधमनक्रिया** - स्मृतिचन्द्रिकानिर्णयसिन्धुस्मृतिकौस्तुभादिधर्मशास्त्रनिबन्धनेषु 'मुखाग्निधमनक्रिया' इति पदेन कलियुगे मुखवायुना अग्निं न धमेदिति निषेध उक्तः । अयं निषेधः आत्मनि समारूढाग्नेरुपावरोहणमपि बाधते । तथा हि 'वास उपावरोह जातवेदः ... .. . ... . दुरोण इति लौकिकेऽग्नावुपावरोहयति' (आप.श्रौ.सू.६-२८-१२) इत्युपावरोहणविधिर्दर्शितः । अस्य सूत्रस्य व्याख्यानावसरे रुद्रदत्तः 'तत्र प्रणयनकाल एवात्मसमारूढाग्नींस्तेनैव क्रमेण लौकिकेऽग्नावुपावरोहयति मुखानिलमर्पयति ।' इति मुखाग्निधमनेन देवभूताग्निना लौकिकाग्नेस्संक्रमणं दर्शयति । आपस्तम्बश्रौतसूत्राणां धूर्तस्वामिभाष्येऽपि यथा वायुर्मुखतो लौकिकमग्निं प्राप्नोति तथा करोति इति उपावरोहणप्रकारान्तरं दर्शितम् । अत्रोक्तकलिवर्ज्यनिषेधेनोपावरोहणप्रकारस्य श्रुत्युक्तस्य बाधात् न स युक्तो भवितुमर्हति । अयं कलिवर्ज्यनिषधो यदि लौकिकाग्निविषयो यदि वा स्मार्ताग्निविषयो यदि वा श्रौताग्निविषयः सर्वथाप्यप्रमाणमेव । यदि तावल्लौकिकविषयः स्मार्ताग्निविषयो वा तर्हि मनुस्मृतौ 'नाग्निं मुखेनोपधमेत्' (४.५३) इत्युक्तत्वादेव कलिवर्ज्योक्तिरनुवादरूपत्वान्न प्रमाणम् । यदि श्रौताग्निविषयोऽयं निषेधः तथापि नैतस्य प्रामाण्यम्, श्रुत्युक्तस्य बाधने सामर्थ्याभावत् श्रुतेर्बलीयस्त्वात्स्मृतेरिति न्यायात् । 'मुखाद्ध्यग्निरजायत । तस्मान्मुखेनोपसमिन्ध्यात्' इति वाजसनेयश्रुतिः । न हि कलिवर्ज्यपठितः श्लोकः श्रुत्युक्तस्य विधेर्बाधको भवितुमर्हतीत्यतोप्यप्रामाण्यम् । मनुना यन्मुखेनाग्निधमनं निषिद्धं तल्लौकिकाग्निविषयकमेव भवितुमर्हति न तु श्रौताग्निविषयकम् । तथा च गोभिलस्मृतिः-'मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत। नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्' (१-१३६) इति । अयं कलिवर्ज्यनिषेधोऽर्वाचीनकालिक इति ज्ञायते । तथा हि आपस्तम्बधर्मसूत्रेषु 'न चैनमुपधमेत्' (आप.ध.सू.१-५.१५.२०) इति सूत्रस्य व्याख्याने लिखति तद्व्याख्याता हरदत्तः - 'एनमग्निमप्रयतो नोपधमेत् । प्रयतस्य न दोषः 'मुखेनोपधमेदग्निं मुखाद्ध्यग्निरजायत' इति स्मृत्यन्तरे दर्शनादिति । नाग्निं मुखेनोपधमेदिति मानवे दर्शनादुभयोर्विकल्पः । अपर आह- वाजसनेये श्रौतप्रकरणे 'मुखाद्ध्यग्निरजायत । तस्मान्मुखेनोपसमिन्ध्यात्' इति दर्शनात् श्रौतेषु मुखेनोपसमिन्धनम्, अन्यत्र स्मार्ते प्रतिषेध इति' इति । अत्र स्मृतिवचनेन न श्रुतिविधेर्बाधो युक्त इति हरदत्तेन दर्शितः । स्मृतिनिषेधे मनुस्मृतिवाक्यमेवोदाहृतं न तु कलिवर्ज्यप्रकरणपठितमिति हरदत्तकाले नासीदेवायं कलिवर्ज्यनिषेध इति ज्ञायते । एवमेव मनुस्मृतिव्याख्याकाराणां मेधातिथ्यादीनामप्यज्ञातमेवेदं कलिवर्ज्यप्रकरणवाक्यं यतो न ते तत्परामृशन्ति । तेषु व्याःख्याकृत्स्वेकतमो नन्दनः आह - 'अग्निं लौकिकाग्निम्, श्रौताग्निं चोपधमेत् । 'मुखाद्ध्येषोऽभिजायते' इति वचनात्' इति । अनेन न तत्काले निषेधोऽयं प्रमाणभूतत्वेनासीदिति गम्यते । तस्मात्कलौ मुखेनाग्निधमननिषेधः श्रौतविषयेऽप्रमाणमेव स्मार्ते वा लैकिके वानुवादत्वान्नातिशयप्रामाण्यं तस्य ॥

कलिवर्जयप्रकरणे निषिद्धानि यानि श्रौतकर्माणि तदङ्गानि च तानि विस्तरेण चिन्तितानि। श्रौतकर्मणां विषये कलिवर्ज्यनिषेधस्याप्रामाण्यं हेतुप्रदर्शनपूर्वकं दर्शितम् । कलिवर्ज्य-प्रकरणस्यार्वाचीनलब्धसत्ताकं प्रख्यातशिष्टैश्चानाघ्राणमप्युक्तम् । दर्शितं च शिलादिलेखनरूपं प्रमाणं कलियुगेऽपि कलिवर्ज्यप्रकरणोक्तश्रौतकर्मणामनुष्ठाने । कलिवर्ज्यत्वे मीमांसाशास्त्रस्य बहुभागस्यानर्थक्यं चोक्तम् । एवं सर्वथा श्रौतकर्मणां विषये कलिवर्ज्यप्रकरणस्याप्रामाण्यं निरूपितम् । अथ प्रसङ्गात् श्रुत्युक्तविषयान्तरेषु श्रौतकर्मसंबद्धविषयेषु च कलिवर्ज्यप्रकरणप्रामाण्यं चिन्त्यतेऽतिसंक्षेपेण ॥

१ **अघसंकोचनम्** - दक्षस्मृतौ 'एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः । हीनं हीनं भवेच्चैव त्र्यहश्चतुरहस्तथा' इति श्रौताग्निमतो वेदाध्यायिन एकाहाशौचं विहितं दशाहाशौचस्थाने । तथैव मन्वादिस्मृतावपि । तदेतदघसंकोचनं कलिवर्ज्यप्रकरणेन निषिद्धम्। श्रौताग्निमतां वेदविदामघसंकोचननिषेधो न प्रमाणं भवितुमर्हति यतः कलियुगे विशेषप्रमाणवत्यां पाराशरस्मृतावपि 'एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः' (पारा. ३.५) इत्यघसंकोचनमुपदिष्टम् । अपि च सत्रपूतस्याहिताग्नेः सद्यःशोचमुक्तम् 'सव्रतस्सत्रपूतश्चाहिताग्निश्च यो द्विजः । राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः' (पारा.३.२३) इति । अत आहिताग्निविषये कलिवर्ज्यप्रकरणपठितस्याघसंकोचननिषेधस्याप्रामाण्यमेवाथवानिषेधो विकल्प एव स्यात् ॥

२. **गुरुदक्षिणा** - विद्याग्रहणानन्तरमुपकुर्वाणो ब्रह्मचारी स्नास्यन् गुरुणा दत्ताज्ञो गुरवे दक्षिणां दद्यादिति नियमस्य 'दक्षिणा गुरुचोदिता' इति कलौ निषेध उक्तः । ब्रह्मचारिणा दक्षिणादानं न केवलं स्मृतिचोदितं किन्तु श्रुतिविहितमपि । तथा तैत्तिरीयोपनिषदि शीक्षावल्यां श्रूयते- 'वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' (तै.शी. १.११) इति । अस्य च शङ्कराचार्यभाष्यम् - 'वेदमनूच्य इत्येवमादिकर्तव्योपदेशारम्भः प्राग्विज्ञानात् नियमेन कर्तव्यानि श्रौतस्मार्तकर्माणि इत्येवमर्थः । अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्। संस्कृतस्य हि विशुद्धसत्त्वस्य आत्मज्ञानम् अञ्जसैव उत्पद्यते । .... अनुशासनातिक्रमे हि दोषोत्पत्तिः । ... इह तु (उपदेशः) ज्ञानोत्पत्त्यर्थत्वात् कर्तव्यतानियमार्थः । ... आचार्याय आचार्यार्थं प्रियम् इष्टं धनमाहृत्य आनीय दत्त्वा विद्यानिष्क्रयार्थम्, आचार्येण चानुज्ञातोऽनुरूपान् दारान् आहृत्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः । प्रजासन्ततेर्विच्छित्तिर्न कर्तव्या' इति । अतो भाष्यादवगम्यते गुरुदक्षिणावश्यं दातव्या, अनुशासनातिक्रमे दोषश्चेति । अनुशासनपालनं च संस्कारार्थं तद्द्वारात्मज्ञानार्थं चेति । श्रुत्युपदेशाद्गुरुदक्षिणा दातव्यैवानादृत्य कलिवर्ज्यप्रकरणनिषेधम् । तस्मादयं कलिवर्ज्यनिषेधोऽप्रमाणमेव श्रुतिविरोधात्, दक्षिणादानस्य

संस्काररुपत्वेनात्मज्ञानोत्पत्त्युपायत्वाच्च ॥

३. **संसर्गदोषः** - महापातकेन सह संसर्गे कलौ न पातित्यदोष इति कलिवर्ज्यप्रकरण उक्तम् । निर्णयसिन्धौ 'कलौ कर्तैव लिप्यते' इति व्यासोक्तेः 'पतितसंसर्गे दोषसत्त्वेऽपि पातित्यं नेत्यर्थः' इत्युक्तम् । पाराशरस्मृतौ च 'कलौ पतति कर्मणा' (पारा.१.२६) इति कर्मणैव पातित्यं न तु पतितैस्सह संसर्गेणापीत्युक्तं भवति । कलियुगे संसर्गेण पातित्याभावकथनं श्रुत्या विरुध्यते । छान्दोग्योपनिषदि 'स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति' (छां.५.१०.९) इति संसर्गेऽपि पातित्यमुक्तम् । कथं कलिवर्ज्यप्रकरणमन्यद्वा स्मृतिवाक्यं श्रुत्युक्तस्य पातित्यस्य बाधकं स्यादिति वेदैकप्रमाणैश्चिन्त्यम् । न हि स्मृतिवाक्यं श्रुतेर्बाधकं भवितुमर्हति बलीयस्त्वाच्छ्रुतेस्स्मृत्यपेक्षया । शङ्कराचार्यभाष्यमपि 'पञ्चमश्च तैः सह आचरन्निति' इति वदत् संसर्गे पातित्यमुररीकरोति । न च कलिवर्ज्यस्य परामर्शो विद्यते भाष्ये । ननु छान्दोग्यश्रुतेर्युगान्तरविषयत्वेन सावकाशत्वात् व्यसादिवाक्यानां निरवकाशत्वात् श्रुत्युक्तस्यापि संसर्गनिमित्तस्य पातित्यस्य कलौ निषेधो नाप्रमाणमिति चेत् । न, सामान्योक्तेः , नित्यत्वाच्च श्रुतेः । संसर्गनिमित्तस्य पातित्यस्य छान्दोग्ये सामान्येनैवोक्तत्वान्न कालनियमः तस्य कल्पयितुं शक्यते । श्रुतिश्च नित्या अतो न युगभेदेन श्रुतिभेदो वचनमन्तरेण । अतः कलौ संसर्गदोषाभावो न प्रमाणं श्रुतिविरोधादिति ॥

४. **नैष्ठिकब्रह्मचर्यवानप्रस्थसंन्यासाश्रमस्वीकारस्य निषेधः** - कलियुगे गार्हस्थ्यं विहायाश्रमान्तरेषु नैष्ठिकवानप्रस्थसंन्यासेष्वधिकारो न विद्यते कलिवर्ज्यप्रकरणे निषेधात्। निषेधश्चायमप्रमाणमेव भवितुमर्हति श्रुतिविरोधात् । तथा हि छान्दोग्योपनिषदि- 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' (छां.२.२३.१) इति वानप्रस्थनैष्ठिकब्रह्मचर्यसंन्यासाश्रमाणां परामर्शः फलकीर्तनं च दृश्यते । बृहदारण्यकोपनिषदि च 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृ.३.५.१) इति संन्यासविधिः । न हि कलिवर्ज्यप्रकरणं श्रुतिविधानमतिवर्तितुमलम् । धर्मशास्त्रनिबन्धनग्रन्थेषु संन्यासस्य कलिवर्ज्यत्वमुक्त्वा तस्य निषेधस्य प्रतिप्रसवत्वेन श्लोकं पठित्वा कलौ संन्यासस्य प्रामाण्यं स्थापितम् । संन्यासनिषेधस्य श्रुतिविरोधादप्रामाण्ये सति प्रतिप्रसवश्लोकं प्रति धावनं व्यर्थप्रयास एवेत्यस्मन्मतिः । यदि संन्यासनिषेधस्य तत्प्रतिप्रसववाक्यस्य च प्रामाण्यमिष्टं तर्ह्येवं व्यवस्था भवितुमर्हति - संन्यासो द्विविधः श्रुत्युक्तः स्मृत्युक्तश्चेति । तत्राद्य एषणात्रयत्यागरूपो लिङ्गवर्जितः परमहंसपारिव्राज्याख्योऽत्याश्रमलक्षण आत्मज्ञानाङ्गम् । द्वितीयः स्मृत्युक्तः लिङ्गसहितः ब्रह्मलोकादिफलकः आश्रमरूपः । शङ्करभगवत्पादाचार्यकृतबृहदारण्यकोपनिषदादिभाष्याधारेण (बृ. भा. ३.५.१, छां.भा.२.२३.१) द्विप्रकारसंन्याससत्त्वे सति कलिवर्ज्यसंन्यासनिषेधः

तत्प्रतिप्रसवश्च स्मृत्युक्तसंन्यासविषये प्रमाणं भवतु न तु श्रुत्युक्तसंन्यासविषये ॥

५. **सर्ववर्णभैक्ष्यम्** - 'यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः' इति संन्यासिनां सर्ववर्णभिक्षाचर्यं कलौ निषिद्धम् । अयमपि निषेधः श्रुतिविरुद्धः । अत्र काठकब्राह्मणम्- 'चतुर्षु वर्णेषु भैक्षचर्यं चरेत्' इति । मैत्रायणीश्रुतिः - 'अथान्यः परिव्राडेकशाटीपरिहितो मुण्ड उदरपात्र्यरण्यनिष्ठो भिक्षार्थं ग्रामं प्रविशेत् । सायं प्रदक्षिणेनाविचिकित्सं सार्ववार्णिकं भैक्षचरणमभिशस्तपतितवर्जितम्' इति । अन्यच्च । बृहदारण्यकोपनिषद्भाष्यवार्तिकटीकाकारस्य आनन्दज्ञानस्य कालेऽयं कलिवर्ज्यनिषेधो नासीदिति ज्ञायते यतष्टीकायां 'चातुर्वर्ण्यं चरेद्भैक्षम्' इति वाक्यं प्रामणत्वेनोदाहृतम् । तस्मात् संन्यासिनां सर्ववर्णभिक्षा- निषेधोऽप्रमाणमेव । भवतु कलिवर्ज्यवाक्यं स्मृत्युक्तसंन्यासविषये प्रमाणं न तु श्रुत्युक्तसंन्यासविषये तत्प्रमाणं भवितुमर्हति ॥

समाप्तेयं चिन्ता कलिवर्ज्यप्रकरणश्रौतकर्मविषया । नानेन चिन्तनेन वयं याज्ञिकान् कलिवर्ज्य-निषिद्धश्रौतकर्मकर्माङ्गेषु प्रवर्तयितुमुद्युक्ताः । यदि केचन याज्ञिकाः स्मृतीनां धर्मशास्त्रनिबन्धनानां च श्रुत्यपेक्षया प्रामाण्याधिक्यं मन्येरन्, मन्यन्तां नाम ते तथा । किन्तु ये श्रुतिमेव परमप्रमाणमिति मन्यन्ते स्मृतिपुराणाचारापेक्षया ते श्रुत्युक्तकर्मसु श्रुत्युक्तेतिकर्तव्यताप्रकारेणैव प्रवर्तन्तां श्रुतिविषयेऽप्रमाणभूतकलिवर्ज्यप्रकरणोक्त निषेधाननादृत्यैवेति तादृशश्रुतिबलावलम्बिनां कृते कृतेयं चिन्ता ॥

अत्रैते श्लोकाः पठ्यन्ते -

मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।
कलिवर्ज्यभिया तद्वच्छ्रौतं कर्म जिहासितम् ॥१
अग्निहोत्रं तथाधानं राजसूयो महामखः ।
ब्राह्मणेन च शामित्रं सोमविक्रयणं तथा ॥२
गोहिंसा पशुहिंसा च नरमेधक्रतुस्तथा ।
सत्रयागोऽश्वमेधश्च मुखाग्निधमनक्रिया ॥३
क्रिया अत्रोदितास्सर्वा अपि वेदेन चोदिताः ।
निषिद्धाः कलिवर्ज्येन ह्यनादृत्य श्रुतेर्वचः ॥४
श्रौतान्यन्यानि कर्माणि तेषामङ्गान्यपि क्वचित् ।
कलिवर्ज्यनिषेधेन त्याजितान्यविवेकिभिः ॥५
सर्वाधाने तथा लेहेहवण्याः प्राशनात्परम् ।
सुराग्रहग्रहे चापि कलिना भीषिता जनाः ॥६
श्रुतेर्बलं समादाय स्मृतिकुक्षौ निवेशितम् ।
कलिवर्ज्यमतो दृप्त्या श्रुतिं जग्ध्वा प्रनृत्यति ॥७

शास्त्रार्थस्य विरोधेन स्वमतिप्रभवं कृतम् ।
संप्राप्य कलिसाहाय्यं शास्त्रीयमितिचाब्रुवन् ॥८
(कलिवर्ज्यप्रणेतार इति शेषः)
श्रुतेः स्मृतेर्बलीयस्त्वं विपर्यस्तं कलौ युगे ।
अहो मोहस्य माहात्म्यं लीलेयं कलिना कृता ॥९
धर्माच्च पुरुषार्थाच्च च्याविता याज्ञिका जनाः ।
कलिवर्ज्यनिषेधेनाविचार्यैव श्रुतेर्बलम् ॥१०
(तस्मात्)
हानार्थं श्रुतहानस्य श्रुतेः प्रियचिकीर्षया ।
स्वबोधपरिशुद्ध्यर्थं चिन्तितं कलिवर्जनम् ॥११
अविज्ञातमिदं वर्ज्यं प्राचीनैः शास्त्रकोविदैः।
कलौ युगेऽप्यनुष्ठानमश्वमेधादिकर्मणाम् ।
दृश्यते ताम्रपत्रेषु शिलास्वप्यत एव हि ॥१२
आचार्यः शबरस्तस्मान्नैवावोचन्मनागपि ।
इदं वर्ज्यं कलाविति प्रमाणाभावकारणात् ॥१३
(तत्काले इति शेषः)
मेधातिथिस्तथा विश्वरूपो भट्टः कुमारिलः ।
नोचुर्वर्ज्यमिदं किञ्चित्स्वग्रन्थेषु मनागपि ॥१४
आचार्यश्शङ्करश्चैव नोवाच कलिवर्जनम् ।
तथा सुरेश्वराचार्यस्तन्नावोचत्स्ववार्तिके ॥१५
अनाघ्रातमिदं वर्ज्यं पूर्वाचार्यैर्यथोदितम् ।
कालक्रमेण निक्षिप्तं प्रत्येकं कलिवर्जनम् ॥१६
प्राकट्यं च ऋषेर्नाम्ना स्वप्रामाण्यचिकीर्षया ।
एवं श्रुतिं पराजित्य प्रमाणमिव राजते ॥१७
येषां श्रुतिरबल्या स्यात् दासत्वं च स्मृतेर्गतम् ।
कामं भवतु तेषां वै कलिवर्ज्यं प्रमाणकम् ॥१८
बलीयसी श्रुतिर्येषां स्मृतीनामपि जीवभृत् ।
वर्ज्यं तु न प्रमाणं स्याच्छ्रुतिवाक्योपजीविनाम् ॥१९
स्मृत्या श्रुत्युपजीविन्या श्रुतिरेषा चिरंतनी ।
कदाचन न सा बाध्या नातो वर्ज्यं प्रमाणभाक् ॥२०

विहितस्य हि त्यागेन कथं स्यात्कर्मसाङ्गता ।
नाङ्गहीनं च यत्कर्म फलदायि क्वचिद्भवेत् ॥२१
साङ्गेन विधिना तस्मात्कर्म कुर्युर्विवेकिनः ।
कलिवर्ज्यमनादृत्य श्रुतिमार्गे प्रतिष्ठिताः ॥२२
अतो लेहे न दोषोऽस्ति हवण्याः प्राशनात्परम् ।
श्रुत्युक्तविधिना कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२३
आधानं सर्वमर्धं वाप्यग्निहोत्रं ततः परम् ।
कलौ तु शक्यते कर्तुं तथा श्रुतिविधानतः ॥२४
सुराग्रहोऽपि सुत्राम्णे श्रुतत्वान्न कलेर्भयम् ।
पयसस्तु विकल्पत्वात्तस्य स्यादथवा ग्रहः ॥२५
वाजपेये सुरात्यागो वचोऽभावात्कथं भवेत् ।
अन्यत्रैवं विधानाद्धि विकल्पोऽत्रापि युज्यते ॥२६
विक्रीणाति यथा सोममनादृत्यैव वर्जनम् ।
ब्राह्मणोऽपि च शामित्रं कुर्वन्नाप्नोति किल्बिषम् ॥२७
श्रुत्युक्तत्वान्न दोषोऽस्ति शामित्रे क्रयणे तथा ।
सत्रदीक्षानिषेधेन सत्रयागो प्रबाधितः ॥२८
दीर्घसत्रं तदन्यद्वा निषिद्धमुभयं कलौ ।
श्रुतौ न युगभेदेनासनं सत्रस्य चोदितम् ॥२९
त्रेताद्वापरसत्येषु कलौ चापि समानता ।
गार्हपतेऽधिकारस्स्यात्क्षत्रियस्य यथा कृते ॥३०
कलावपि तथैव स्याद्वैश्यस्यापि तथैव हि ।
युगान्तरानुगुण्येन सत्रधर्मो न भिद्यते ।
न दक्षिणा कृते यद्वत्तदभावः कलावपि ॥३१
दक्षिणा गोसहस्रस्य कृते पृष्ठशमे यथा ।
तथा कलौ पृष्ठशमे गोसहस्रस्य दक्षिणा ॥३२
सत्रासनं कलौ यस्माच्छिलालेखैश्च घोषितः ।
अतोऽपि न प्रमाणं स्यात्कलौ सत्रनिषेधनम् ॥३३
क्रतुराडश्वमेधश्च सर्वपापप्रणाशकः ।
तथाप्येष निषिद्धोऽभूत्कलेरेव प्रभावतः ॥३४
जातिभेदेन भिद्येताधिकारस्तु क्वचिच्छ्रुतौ ।

न जातु युगभेदेनाधिकारश्श्रूयते श्रुतौ ॥३५
कृते यथाधिकारः स्याद्यस्य यस्मिंश्च कर्मणि ।
कलावपि तथैवासौ तस्य तस्मिंश्च कर्मणि ॥३६
न क्वचिद्युगभेदेन फलं यागस्य भिद्यते ।
श्रद्धाभक्त्यतिशायेन भिद्येतैव क्रियाफलम् ॥३७
क्रियमाणोऽभिसन्धाय हयमेधो महान्क्रतुः ।
ब्रह्मविश्वसृडादीनां स्थानं राज्ञे प्रयच्छति ॥३८
ईश्वरार्पणबुद्ध्या वा क्रियमाणः क्रतुस्त्वयम् ।
क्रमेण ज्ञानमुत्पाद्य मुक्तिं चापि प्रयच्छति ॥३९
इष्टश्च हयमेधोऽयं राजभिः कलिवर्तिभिः ।
दृश्यते तत्प्रमाणं च शिलाताम्रादिशासने ॥४०
वर्ज्योक्तिर्न प्रमाणं स्यात्कलिभेदेन या स्मृता ।
अतिक्रम्यापि तामुक्तिं श्रद्दधानो न दोषभाक् ॥४१
तथैव राजसूयं च सार्वभौमो भवेद्यदि ।
कलौ युगेऽपि कुर्यात्स शङ्कराचार्यवाक्यतः ।
शिलालेखनमानेभ्य एवमेतन्न चान्यथा ॥४२
नारायणो हि पुरुषो जगतः परिपालकः ।
पूर्णत्वात् पुरिशायीति पुरुषस्सोऽभिधीयते ।
तस्य पूरुषमेधेन परितोषो निवारितः ॥४३
नूनं नास्तिक्यमेवेदमनारायणराधनम् ।
कल्पितं कलिवर्ज्येन कलेरतिप्रभावतः ॥४४
श्रद्धाविवेकरहितैर्वर्ज्यमेतत्तु कल्पितम् ।
अन्यथा नैव युक्तं स्याद्विराड्यागनिषेधनम् ॥४५
नारायणः परः प्रोक्तो विराट्संज्ञो महान्पुमान् ।
अन्तर्यामी च भूतानामपि वर्ज्यकृतां नृणाम् ॥४६
(वर्ज्यकृतां नृणाम् = कलिवर्ज्यप्रकरणप्रणेतॄणाम् ।)
इज्यते नरमेधेनादृष्टो द्रष्टा नरोत्तमः ।
नैवालं बाधितुं कर्म स्मृतिरेषातिदुर्बला ॥४७
वाजिश्रुतौ विधानाद्धि हेतुदर्शनपूर्वकम् ।
मुखेन धमनं श्रौते प्रमाणं स्याद्युगे युगे ॥४८

वर्ज्ये यदि महान्स्नेहो वर्ज्यं स्मार्ते निवेश्यताम् ।
श्रौतेषु कलिवर्ज्यस्य न पुच्छमपि चालयेत् ॥४९

तस्माच्छ्रुतिविरुद्धत्वात्कलिवर्ज्यनिषेधनम् ।
न कल्प्यमश्रुतत्वाच्च श्रुतत्यागोऽप्यनर्थकः ॥५०

चिन्तेयं कलिवर्ज्यस्य कृता प्रकरणस्य या ।
वेदैकशरणेनैव वेदोऽयं प्रीयतां तया ॥५१

ओं तत् सत्



## आशौचे श्रौतकर्मानुष्ठानम्

अथेदानीमाशौचे श्रौतकर्मानुष्ठानमधिकृत्य किञ्चिच्चिन्त्यते । ननु किमर्थेयं चिन्ता? प्रसिद्धः खल्वाशौचे सर्वेषां कर्मणां निवृत्तिरिति । न, विप्रतिपत्तिदर्शनात् । अस्मिन् विषये याज्ञिका अन्यथाऽन्यथाऽनुतिष्ठन्तो दृश्यन्ते । तद्यथा केचिदाशौचेऽप्यग्निहोत्रमात्रं जुह्वति, नान्यत्कर्मानुतिष्ठन्ति श्रुतिचोदितमपि । केचित्तु दर्शपूर्णमासाभ्यां च यजन्तेऽग्निहोत्रवत्, यावज्जीवश्रुतिचोदितत्वात्तयोरपि । आरब्धकर्मणामेवानुष्ठानं नान्येषां नित्यानामपीति केचित् । तत्राऽरब्धे कर्मण्याशौचे प्राप्ते केषाञ्चिदङ्गानामननुष्ठानमिति केचित् । अन्ये त्वाशौचे सर्वेषामपि कर्मणां कात्स्न्र्येन निवृत्तिरेवेत्यग्निहोत्रशालाप्रवेशमपि निषिद्धं मन्वानास्सन्ति । केचित्तु सर्वेषामपि श्रौतकर्मणामान्तमनुष्ठानं कर्तव्यमेवेति मन्यन्ते । एवमेव धर्मशास्त्रनिबन्धकाराः शास्त्रज्ञाश्चान्ये नाना प्रतिपद्यन्ते । तस्माच्चिन्तनीय एवायं विषयः । यद्येवम्, तर्हि प्रवर्ततां चिन्ता, किन्तु न तस्य प्रयोजनं  पश्यामः । यतो निर्णीतेऽपि शास्त्रार्थे याज्ञिकाः तं नाभ्युपगच्छेयुः स्वसम्प्रदायग्रहाविष्टाः । अतो व्यर्थैव किल चिन्ता । न ,अत्र ब्रूमः न वयं पक्षं गृहीत्वा याज्ञिकानां विविधाचारान् खण्डयितुं मण्डयितुं वा प्रवृत्ताः । किन्तु केवलशास्त्रार्थनिर्णयायैवाऽयं विचारः प्रतानितोऽस्माभिः । प्रयोजनं चास्य पश्यामः शास्त्रार्थनिर्णयानुसारेण श्रौतकर्मणामनुष्ठानमननुष्ठानं वा न दोषानावहति मात्रयापीति । अन्येन दोषानारोपयितुं  न शक्यते इति च ।

आशौचं नाम सपिण्डादीनां जनने मरणे वा सति यदप्रायत्यम् । तत्तु केषुचित् शास्त्रीयकर्मस्वयोग्यतापादकमस्पृश्यतापादकं च । तथा च पराशरमाधवीये मनुः–'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहो होमस्स्वाध्यायश्च निवर्तते' इति ।

इतः परमाशौचे श्रौतकर्मानुष्ठानं कथमिति शास्त्रवाक्यान्युद्धृत्य विचार्यन्ते ।

### (अ) आशौचे प्राप्तेऽपि श्रौतकर्माणि न त्याज्यानि

१. 'न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः । न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत्' इति मनुः (५–८४) । अत्र अग्निष्विति बहुवचनप्रयोगात् त्रेताग्निसम्बद्धानि कर्माण्युच्यन्ते । तेषां त्यागः नैव कर्तव्यः, तत्कर्म कुर्वाणस्याशुच्यभावात् ।

२. शाङ्खायनश्रौतसूत्रं च – 'अधश्शय्या हविष्यभक्षता प्रत्यूहनं च कर्मणां वैतानवर्जमेकरात्रं त्रिरात्रं नवरात्रं वा, आ वा सञ्चयनात् व्रतानि' (शाङ्खा. श्रौ.सू. ४–१५–६) इति । प्रत्यूहनम्,

वीरमित्रोदये चोदाहृतम् ।

३. 'अग्निहोत्रे च होमार्थं शुद्धिस्तात्कालिकी स्मृता' इति वैद्यनाथीये, स्मृतिचन्द्रिकायां च ।

४. कल्पसूत्रभाष्यकारः निर्णयः, आचार्यः चूडामणिः, मिश्रः इत्यादीनामपि मतेन वैतानकर्माणि यजमानकर्तृकान्येवाशौचेऽपीति वीरमित्रोदये । स्मृतिचन्द्रिकायामप्येवमेव निर्णीतम् ।

पारस्करगृह्यसूत्रवाक्यस्यायमर्थः – आशौचिनो यजमानस्य श्रौतकर्मवर्जमन्यानि नित्यानि कर्माणि निवर्तन्ते । एकेषां मते शालाग्नौ स्मार्ताग्नौ क्रियमाणानि कर्माण्यपि न निवर्तन्ते । अन्य एतानि कुर्युरिति शालाग्निविषयत्वेनैव ग्राह्यः न तु श्रौताग्निविषयत्वेन सन्निहिततरत्वात् । एवं चाधस्तादुदाहृतवाक्यैरस्यैकवाक्यता सम्पद्यते । उत सूत्रस्थपदयोजनैवमपि कर्तुं शक्यते – नित्यानि निवर्तेरन् वैतानवर्जं शालाग्नौ च । एके अन्य एतानि कुर्युः। एवं योजनेनान्यकर्तृकत्वं त्वेकेषां मतमेव न तु सूत्रकारस्येत्यर्थोऽवसीयते । तस्मादाशौचेऽपि याजमानानि कर्माणि यजमानेनैव कर्तव्यानीति सिद्धम् ।

### (इ) आशौचे केवलानि नित्यानि नैमित्तिकानि कर्तव्यानि न तु काम्यानि

किमाशौचे सामान्येन सर्वेषां श्रुत्युक्तकर्मणामनुष्ठानमनुमतमुत केषाञ्चिदेव?

अस्मिन् विषये विभागेन साक्षाद्विधायकवाक्यं स्मृतिषु नोपलभ्यते । तथाऽपि वाक्यार्थपर्यालोचनया नित्यनैमित्तिकान्येव कर्तव्यानि न तु काम्यानीत्यर्थः पर्यवस्यति । तथा हि –

१. 'प्रत्यूहेन्नाग्निषु क्रियाः' इति मनुवाक्येन स्वोचितकालप्राप्तनित्यनैमित्तिकानामेव ग्रहणं न तु काम्यानाम् । आशौचात्पूर्वं नियतेनानुष्ठीयमानानां नित्यनैमित्तिकानामेव श्रौतकर्मणामाशौचेन निवृत्तिः प्राप्ता । तां प्राप्तां निवृत्तिमपवदन्नेवायं वाक्यार्थ उपक्षीयते । काम्यकर्मणामननुष्ठाने प्रत्यवायाभावात् तेषां च यजमानकामेनैव केवलेन प्राप्तत्वाच्चानेन वाक्येन न तेषां ग्रहणमर्हति ।

२. 'दर्शं च पूर्णमासं च कर्म वैतानिकं च यत् । सूतकेऽपि त्यजन् मोहात् प्रायश्चित्तीयते हि सः' प्रायश्चित्तीयत इति पदसमभिव्याहारात् श्रौतकर्मणां नित्यनैमित्तिकानामेव ग्रहणम्, न तु काम्यानाम् । यतो न काम्यकर्मणामकरणे प्रत्यवायो श्रूयते यत्परिहारार्थं प्रायश्चित्तमाक्षिप्यते ।

३. 'न प्रत्यूहेत्' इति (मनु.५.८४) मनुवाक्यव्याख्यानावसरे मेधातिथिः, कर्मणां नित्यकाम्याभ्यां

स्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियते । श्रुत्यनुरोधेन प्रयोगः प्राप्नोति । स्मृत्यनुरोधेनाप्रयोगः । श्रुतिश्च स्मृतितो बलीयसी । तस्मान्नादृतः प्रयोगनियमः' (शा.भा.६–६–२) इति ।

नन्वेवं चेत् स्मृत्युक्तानामाशौचविधीनामनवकाशत्वात् वैयर्थ्यप्राप्तिस्स्यात्तत्तु न युक्तमिति चेत् । न, अनाहिताग्नीनां विषये सुतरां तद्विधीनामर्थवत्वादाहिताग्नीनां श्रौतकर्मानुष्ठानादन्यत्राशौचनियमस्यार्थत्वात् नाशौचस्यानवकाशत्वम् ।

आधाने तावत् 'यदैवैनं कदा च यज्ञ उपनमेदथाग्नी आदधीत न श्वः श्वमुपासीत । को हि मनुष्यस्य श्वो वेद' (श.ब्रा.२–१–३–९) इति श्रुतिः । इयं सोमपूर्वकाधानस्य विधायिका श्रुतिः यदैवैनमित्यवधारणं कुर्वती विलम्बस्यासहिष्णुतां दर्शयति । 'न श्वः श्वमुपासीत' इति कालव्याक्षेपं निवारयन्ती आधानकर्मणो व्यवधानराहित्यं दर्शयति ।

तथा चाहुः आचार्यशबरस्वामिनः – 'आधानस्य सर्वकालत्वात् । नैव आधाने कश्चित् कालनियमोऽस्ति । यदहरेवैनं श्रद्धोपनमेत् तदहरादधीतेति' इति (शा.भा ५–४–१६) । आचार्यैरियं श्रुतिः ऋतुनक्षत्रकालबाधविषय उदाहृता । एतेनैव सर्वप्रकाराधानस्याप्या शौचनिमित्तकालव्याक्षेपोऽपि निषिद्धो भवति ।

बौधायनश्रौतसूत्रमपि 'अथो खलु यदैवैनं श्रद्धोपनमेदथादधीत । सैवास्यर्द्धिः' इति समानार्थिकां श्रुतिमुदाहृत्यैवं व्याचष्टे – 'तदेतदार्तस्यातिवेलं वा श्रद्धायुक्तस्य' (बौ.श्रौ. सू.२–१२) इति । अत्र सूत्रकारेण यस्य श्रद्धास्ति तस्यापदि वा विहितकालात्यये वा आधानमित्युक्तम् । आधानकालश्च बौधायनगृह्यसूत्रेषूक्तः 'जायामवाप्य दशमेऽहनि अग्नीनादधीत' (बौ.गृ.सू.१–१०–२,३) इति । अनेनापि आशौचनिमित्तेन आधाननिवृत्तेरनवकाश एव गम्यते । तथापि केचिन्नैतदभ्युपगच्छन्ति । शाबरभाष्यादिवचनं कालस्यैव बाधकं मन्यन्ते न त्वाशौचस्य । आशौचनिमित्तेन कालव्याक्षेपो नोदाहृतवचनबाधकः । तस्मादाशौचे नाग्न्याधानं यद्यपि तदहरेवैनं यज्ञ उपनमेदिति तेषामभिप्रायः ।

पशुचातुर्मास्यसोमाग्रयणानि च कर्माण्यग्निहोत्रदर्शपूर्णमासवदेव नित्यानीत्यत आशौचे तेषामपि बाधो न युज्यते । वैद्यनाथीये स्मृत्यर्थसारवाक्यमुदाहृतम् – 'जाताशौचे मृताशौचे त्रेताग्निसाध्याग्निहोत्रदर्शपूर्णमासाद्याः नित्याः नैमित्तिकाः क्रियाः कार्याः' इति ।

अत्र 'आद्याः नित्याः' इत्यनेनाग्निहोत्रदर्शपूर्णमासव्यतिरिक्तानि नित्यनैमित्तिकानि पशुचातुर्मास्यसोमाग्रयणादीनि गृह्यन्ते । तथा च – 'तेन संवत्सरे संवत्सरे यजेत । षट्सु षट्सु

पुनराधेयमित्याश्मरथ्योऽग्न्याधेयमित्यालेखनः' (आप.श्रौ.सू.५–२९–१३) इत्यादि नैमित्तिकाधानकर्मणामप्याशौचं न बाधकं भवति । आशौचनिमित्तेन कालव्याक्षेपे क्रियमाणे अग्निहोत्रादिलोपेन प्रत्यवायप्रसङ्गात् ।

जातेष्ट्यादीनां नैमित्तिकानां तु पर्वापेक्षप्रसङ्गादाशौचापगमानन्तरं पर्वकालेऽनुष्ठितिरिरिति द्वादशलक्षण्यां निर्णीतम् । तथा च शबरस्वामिन आहुः –'अत्रोच्यते पौर्णमास्याममावास्यायां वा । कुतः? श्रुतेः । एवं हि श्रूयते – य इष्ट्या पशुना सोमेन वा यजेत, स पौर्णमास्याममावास्यायां वा यजतेति । नातिभारो वचनस्य । इतरस्मिन् पक्षे कालोऽपेयात् । लक्षणाऽप्यस्मिन् पक्षे स्यात् । अन्यस्यां तिथावन्तर्दशाहे वा कुर्वन् सर्वाण्यङ्गान्युपसंहर्तुं न शक्नुयात् । कालं शौचं च नोपसङ्गृह्णीयात् । तस्मादतीते दशाहे पौर्णमास्याममावास्यायां वा कुर्यात्' (शा.भा.४–३–३९) इति ।

अत्रैव टुप्टीकाकारोऽप्याह –'(पुत्रे जात इत्यत्र) निष्ठा हि भूतसामान्य उत्पद्यते, तस्या यः श्रुत्यर्थः स च कृतेऽपि जातकर्मणि विद्यत एव..... अन्तर्दशाहेऽपि न क्रियेताशौचस्यापरिसमाप्तत्वात् । तस्मात् दशाहोत्तरकालायां पौर्णमास्याममावास्यायां वा कर्तव्या । भिन्ने जुहोतीत्यनन्तरमेव क्रियते' इति ।

रुद्रदत्तः आप.श्रौ.सू.९–२–१ इत्यस्य सूत्रस्य व्याख्यानावसरे जातेष्टिविषये भारद्वाजबौधायनयोर्मतमुदाहरति – 'तत्र आह भारद्वाजः – 'कथं जातेष्टिरित्यूर्ध्वं दशम्येत्याश्मरथ्यो जात एवर्त्विजः कुर्युरित्यालेखन' इति ।

बौधायनश्चाह– 'स ह स्माह बौधायन उत्थितायां निर्दशायां निर्वपेदिति, जातमेव विदित्वेति शालीकिः' ( बौ.श्रौ.सू.२३–१–११) इति । एवमुभाभ्यामाचार्याभ्यामालेखन– शालीकिभ्यां जातमात्रे निर्वापपक्षोऽपि दर्शित आशौचमविगणय्य ।

रुद्रदत्तोऽपि 'जाबालिश्चाह – जन्महान्योर्वितानस्य कर्मत्यागो न विद्यत इति । एतेन जातेष्टिरपि व्याख्याता' इति वदन् सद्य एवानुष्ठानपक्षं दर्शयति । तस्मात् प्रायश्चित्तरूपनैमित्तिकानां कर्मणां पुनराधानजपहोमेष्ट्यादीनामाशौचेऽप्यवश्यकर्तव्यत्वं सिद्धम् । इतराणां नैमित्तिकानां तु दशाहेऽनुष्ठानेऽपि न दोषायेत्यपि सिद्धम् ।

### (ऊ) आरब्धे कर्मण्याशौचापातेऽप्यान्तमेवानुष्ठानम्

अत्रावधेयानि स्मृतिवाक्याानि –

१. 'ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ दाने

६. 'न त्यजेत् सूतके कर्म ब्रह्मचारी स्वकं क्वचित् । न दीक्षणीयायाः (दीक्षण्यात्) परं यज्ञे न कृच्छ्रादितपश्चरन् । पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ॥' (गोभिलस्मृतिः ३–५,६) अस्मिन् वाक्येऽपि यज्ञे दीक्षणीयायाः परं न त्यजेदिति निषेधादान्तमेव यज्ञोऽनुष्ठातव्य इति गम्यते । अत्र सर्वत्र दीक्षितपदेन पत्नीयजमानयोरुभयोरपि ग्रहणम् । उदाहृतवाक्येभ्यो न केवलमृत्विजां यजमानपत्न्योश्च कर्मकाल आशौचाभावो गम्यतेऽपि च कर्माऽऽसमाप्त्यनुष्ठातव्यमवेति स्पष्टं गम्यते ।

*अत्र निर्णयसिन्धुवाक्यविचारः*

कर्ममध्य आशौचपाते निर्णयसिन्धुकार एवमाह – 'अत्र (सोमे) दीक्षितस्य अवभृथात् पूर्वमेवाशौचाभावः । तदादि त्वाशौचमस्त्येव । 'तेन वैतानोपासनाः कार्याः' इति वैतानत्वेऽप्यवभृथादि न भवत्येव । अत एवोक्तं माधवीये ब्राह्मे 'तद्वद् गृहीतदीक्षस्य त्रैविद्यस्य महामखे । स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकम्' इति' इति ।

नैतत् साधु मन्यामहे । प्रथमं तावत् ब्राह्मवाक्यस्योत्तरार्धपाठोऽन्यथा एव दृश्यते वीरमित्रोदये वैद्यनाथीये च । 'स्नानं त्ववभृथे यावत्तावत्तस्य न विद्यते' इति वीरमित्रोदयपठितेन वाक्येनावभृथपर्यन्तं स्नानमपि दीक्षितस्य निषिद्धम् । पूर्वोक्तशातपथीयवाक्यानुसारित्वादयमेव पाठः साधीयानिति मन्यामहे । अभ्युपगम्यापि निर्णयसिन्धुपाठं तत्कृतनिर्णयो दुष्ट एव । तद्वाक्यं ह्यवभृथपर्यन्तं सूतकाभावं वदत् पर्यवस्यति । न तु तदवभृथादि सूतकप्राप्तिं विधत्ते । उभयार्थविधाने वाक्यं भिद्येत । अपि चावभृथप्रभृति सूतकप्राप्तिरित्यर्थकरणे 'यज्ञशेषं समापयेत्' इति विधिना विरोधस्स्यात् । किञ्च, स्मृतिचन्द्रिकायाम् 'यज्ञार्थं बहुसम्भारसम्भृतस्यापि कुत्रचित् आशौचं न भवेत् ........।' इति ब्रह्मपुराणवाक्यमुदाहृतम् । अनारब्धेऽपि यज्ञे यत्राशौचाभावः शास्त्रस्याभिप्रेतः तत्र किमु वक्तव्यमारब्धे कर्मण्यान्तमेव कर्मानुष्ठानं शास्त्रविवक्षितं न त्वावशिष्टकर्मत्याग इति । अतो अवभृथादि न भवत्येवेति निर्णयसिम्धुनिर्णयः दुष्ट एव । यद्यपि निर्णयसिन्धुपाठ एव स्मृतिचन्द्रिकाकारेणापि गृहीतः तथापि न स निर्णयसिन्धुवदवभृथाद्याशौचपातं ब्रवीति ।

अपि च – 'वस्तुतस्तु – दीक्षणीयासंस्कृतस्य प्रागवभृथात्कर्मप्राप्त्यर्थं 'दीक्षित' ग्रहणम् । तेन ततः पूर्वं निषेध एव' इति निर्णयसिन्धुकारमतमपि दुष्टमेव । 'ऋत्विजां यजमानानां परिकर्मादिकुर्वताम्' इति पूर्वोदाहृतेन वैद्यनाथीयाङ्गिरोवाक्येन विरोधात् । दीक्षितस्य यज्ञसङ्कल्पानन्तरमागतमाशौचं न विद्यत इति वैद्यनाथीय उदाहृतचन्द्रिकाकारमतेन च विरोधात् । 'आशौचं कर्ममध्ये तु शावं सूतकमेव

(ऋ) सम्भृतसम्भारस्याप्याशौचाभावः –

अप्रारब्धेऽपि यज्ञे क्वचिदाशौचाभावः शास्त्रेण विहित उपलभ्यते । तद्यथा – 'यज्ञार्थं बहुसम्भारसम्भृतस्यापि कुत्रचित् । आशौचं न भवेत् ..........॥' इति स्मृतिचन्द्रिकायां ब्रह्मपुराणवाक्यम् । अस्य वाक्यस्यार्थः तत्रैवं कृतः – 'अयमर्थः – यज्ञार्थं सम्भृतसम्भारस्य कल्पितसमस्तयज्ञसाधनपदार्थस्याकृतयाग– सङ्कल्पस्याप्याशौचापगमादूर्ध्वं वसन्तान्तर्गतकर्मकालासम्भवे तस्मिन् संवत्सरे करिष्यमाणयज्ञातिक्रमविषये यज्ञसङ्कल्पात् पूर्वक्षणे शुद्धिर्भवति' इति । अत्र स्मृतिचन्द्रिकाकारकृतस्य 'वसन्तान्तर्गतकर्मकालासंभवे' इति सङ्कोचस्य नियमाभवात् नात्र निश्चितप्रतिपत्तिकारणं पश्यामः, प्रमाणाभावाच्च । अतो दुर्बलोऽयं वाक्यार्थः । तस्मादाशौचापगमानन्तरं कालाभावे भावे वा सम्भृतसम्भारस्य यज्ञार्थं नाशौचमिति स्थितिः ।

(ऌ) **ग्रामाशौचः**

अन्तश्शावनिमित्तं यदाशौचं तत् श्रौतकर्मणां नोपरोधाय कल्पते । तथा हि वैद्यनाथीय आत्रेयः – 'श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसी । तस्मादन्तश्शवे ग्रामे जुहुयात् श्रौतपावकम्' इति ।

**(ए) आशौचे अग्नेः समारोपः प्रत्यवरोहश्च–**

आशौचे श्रौताग्नेः समारोपणप्रत्यवरोहौ न बाध्येते वैतानिकत्वात्तयोः। आशौचनिमित्तकर्मनिवृत्तेः यथाग्निहोत्रादीनां श्रुत्युक्तानां कर्मणामपवादः तथैव समारोपणप्रत्यवरोहयोरप्यपवादो ग्राह्यः श्रुत्युक्तत्वादेव तयोः । श्रुतौ, कल्पसूत्रेषु, स्मृतिषु वाऽऽशौचे समारोपणप्रत्यवरोहणनिषेधो नोपलभ्यते । न केवलं निषेधाभावः किन्त्वग्निहोत्रादिनित्यकर्मणां लोपप्रसङ्गवारणाय तौ समारोपप्रत्यवरोहाववश्यं कर्तव्यावेव प्रसङ्गे प्राप्ते । तौ कृत्वापि स नित्यकर्मानुष्ठानलोपं निवारयेत् ।

केचित्तु समारूढेष्वग्निष्वाशौचे प्राप्तेऽग्निनाशं मन्यन्ते । ततश्च पुनराधानं भवतीत्याहुः । अस्मिन् विषये निर्णयसिन्धुमेव प्रमाणयन्ति । निर्णयसिन्धुकारः एवमाह – 'समारूढे त्वग्नौ तेनापि न कार्यम् । किं तु पुनराधानमेव । समारोपप्रत्यवरोहयोराशौचापवादाभावात्, अनन्यकर्तृकत्वाच्च । अन्यथा पुनराधानमपि स्यात्' इति ।

अत्र 'तेनापि' इत्यनेन तैत्तिरीयादिर्गृह्यते । न 'कार्यम्' इत्यग्निहोत्रादीनां निषेध उच्यते । न वयमेतन्निर्णयसिन्धुमतं साधु मन्यामहे । तद्दर्शितहेतुद्वयस्याप्यनुपपन्नत्वात् । समारोपप्रत्यवरोहयोरप्याशौचापवादसत्त्वाच्च । समारूढप्रत्यवरोहावग्निहोत्रादिवदेव त्रेताग्निसम्बद्धौ ।

'आत्मारूढो निमज्जेद्वा वदेद्वा पतितादिभिः । अनृतौ च स्त्रियं गच्छेदथवा काममोहितः । वदन्त्येषु निमित्तेषु केचिदग्निविनाशनम् । आपस्तम्बस्य तन्नेष्टमात्मारूढः सदा शुचिः' इति ।

यच्च हेतुरुक्तो निर्णयसिन्धुकारेण 'अनन्यकर्तृकत्वाच्चेति, तत्र ब्रूमः । नास्ति नियमोऽरण्योस्समारोपणमनन्यकर्तृकत्वमेवेति । अरणिसमारोपणस्याध्वर्युकर्तृक–त्वेनाप्युक्तत्वात्।

आत्मारूढाग्नेर्नाशौचनिमित्तनाश इत्यत्रानुमानं च प्रवर्तते । तथा हि – यजमानस्य मरणे अग्निर्यद्यात्मन्यरण्योर्वा समारूढो भवति तत्र विधिरुक्तो भारद्वाजेन – 'यद्यात्मन्यरण्योर्वा समारूढेष्वग्निषु यजमानो म्रियेत पूर्ववदग्न्यायतनानि कल्पयित्वा यजमानायतने प्रेतं निधाय गार्हपत्यायतने लौकिकमग्निमुपसमाधाय प्रेतस्य दक्षिणं पाणिमभिनिधाय तत्पुत्रो भ्राता वाऽन्यः प्रत्यासन्नबन्धुरुपावरोह इत्युपावरोहयति । अरण्योर्वोपावरोह्य मन्थेत् । यदरण्योः समारूढः स्यान्निर्वर्तमाने प्रेतमन्वारम्भयित्वैतं मन्त्रं जपेत्'( भा.पि.सू २–१०–५,६,७) इति । अस्यामप्यवस्थायामग्निर्नैव नष्ट इति कृत्वैव शास्त्रेण साक्षादुपावरोहणं विहितम् । यदि विच्छिन्नाग्निश्चेत् तस्य प्रेताधानाख्यं कर्मान्तरमेव विहितम् भा.पि.सू.२–९–७,८,९,१०,११ इत्यत्र । न त्वारूढाग्निपक्षे प्रेताधानं विहितम् । यदि समारूढाग्नेर्यजमानस्य मरणे अग्निनाश एव शास्त्रमभिप्रैष्यत्तर्हि प्रेताधानमेव व्यधास्यत् । नैतदेवमस्ति । साक्षान्मृतशरीरादेव उपावरोहणमुक्तम् । तस्मान्मृतशरीरसम्बन्धेऽपि नाग्निनाशः तन्निमित्तं पुनराधानं वा । अत्र समारूढाग्नेर्यजमानस्य साक्षान्मृतशरीरादेवोपावरोहणस्योक्तत्वादेव । एवं स्थिते अन्यनिमित्तकाशौचप्राप्ते समारूढोऽग्निर्न नश्यति, न तन्निमित्तं पुनराधानं वेति सिद्धमेव भवति ।

अरण्योर्वाऽऽत्मनि वा समारोपणस्य यजमानकर्तृकत्वेऽपि श्रौतकर्मत्वादेवाशौचं न बाधकम् । तस्मान्न समारोपोपावराहावाशौचे बाध्येते यथाह निर्णयसिन्धुकारः।

यदप्युच्यते निर्णयसिन्धुकारेण – 'येषां बह्वृचादीनां द्वादशरात्रमहोमेऽपि नाग्निविच्छेदस्तैर्न कार्यम् । तैत्तिरीयाद्यैः कार्यम्, चतूरात्रमहूयमानोऽग्निर्लौकिकस्सम्पद्यत इति सुदर्शनभाष्ये वचनात्' इति, तदपि न सुष्टूक्तम् । एवं वदन्निर्णयसिन्धुकारः पुनराधनं परिहर्तुं प्रवृत्तः न तु नित्यकर्माण्यनुष्ठापयितुमिति गम्यते । 'प्रत्यूहेन्नाग्निषु क्रियाः' इत्यादिभिः शास्त्रस्याऽऽशौचेऽपि नित्यकर्मानुष्ठान एव तात्पर्यं न तु तत्त्यागे । निर्णयसिन्धुकारमतेनेदं तात्पर्यं त्यक्तं स्यात् । उदाहृतद्वादशरात्रमहोमवाक्यमपि न कर्मनिवृत्तिपरं प्रवृत्तिपरं वा । किन्त्वहोमे अग्निविनाशपरमाशौचसत्त्वे असत्त्वे वा । अपि च 'चतूरात्रम्' इति वाक्यं सुदर्शनवाक्यत्वेन यदुक्तं न तत् सुदर्शनभाष्यकारस्य स्ववचनम्, किन्तु श्रुतिरेव सा । तथा हि

३. नित्यानि नैमित्तिकान्येव कर्माण्याशौचे कर्तव्यानि न काम्यानि ।

४. सर्वाण्यपि नित्यानि कर्माण्यग्निहोत्रदर्शपूर्णमासचातुर्मास्याग्रयणपशुसोमाश्च कर्तव्यानि । न नित्यकर्मसु सङ्कोचः । केषाञ्चिन्मतेनाऽऽधानस्याप्याऽऽशौचं न बाधकम् ।

५. प्रायश्चित्तरूपाणि नैमित्तिकानि दोषपातानन्तरमेव कर्तव्यान्याऽऽशौचभावेऽपि । अग्निनाशादिनिमित्तपुनराधनमाशौचेऽपि कर्तव्यमेव । जातेष्ट्यादि नैमित्तकं त्वाऽऽशौचानन्तरं कर्तव्यमित्येकः पक्षः । सद्य एवेत्यन्यः पक्षः ।

६. आरब्धे कर्मण्याशौचापाते नित्ये नैमित्तिके काम्ये वा आन्तमेवानुष्ठानम् ।

७. यज्ञार्थं सम्भृतसम्भारस्य यज्ञारम्भात्प्रागाशौचप्रप्तेऽपि यज्ञसङ्कल्पपूर्वक्षणे शुद्धिः ।

८. ग्रामाशौचं न श्रौतकर्मबाधकम् ।

९. समारोपप्रत्यवरोहावरण्योरात्मनि वाऽऽशौचेन न बाध्येते ।

१०. आशौचे पक्षहोमाः पाक्षिकेन कर्तुं शक्याः ।

११. आशौचाहतयजमानस्यान्नभक्षणे न दोषः । अन्नं तु परैर्देयमिति।

## परिशिष्टचिन्ता

एतावता यत्प्रतिपादितमधस्तात्तदनपेक्ष्यैव पराशरस्मृतिमघसङ्कोचविधायकस्मृतीश्च । इदानीं तद्गतानि कानिचन वाक्यान्याशौचविषयकानि परिशील्यन्ते, 'कलौ पाराशराः स्मृताः' (परा.१–२४) इति पराशरस्मृतेः कलियुगे प्रामाण्यविशेषस्मरणात् । उपलभ्यन्ते हि तत्राशौचविषयकानि वाक्यानि श्रौतकर्मिसन्बद्धानि विशेषप्रत्ययकरणानि । तद्यथा – 'ब्रह्मचारी गृहे येषां हूयते च हुताशनः । सम्पर्कं चेन्न कुर्वीत न तेषां सूतकं भवेत्॥' (३–२०) 'सम्पर्काद्दुष्यते विप्रो जनने मरणे तथा । सम्पर्केषु निवृत्तस्य न प्रेतं नैव सूतकम्' (३–२१) इति ।

अत्र ब्रह्मचारीति नैष्ठिकस्योपकुर्वाणस्य च ग्रहणम् । गृहे येषां हूयते हुताशन इति श्रौताग्निहोत्रिणो ग्रहणम् । श्रौताग्निसम्बद्धनित्यनैमित्तिककर्मणामेवाशौचेऽपि त्यागस्य निषेधात् स्मृत्यन्तरेषु । तौ ब्रह्मचार्यग्निहोत्रिणौ यदि सम्पर्कन्न कुरुत आशौचिभिः सह तर्हि तयोराशौचाभाव एव । सम्पर्कश्चाशौचिनां स्पर्शः साक्षात् परम्परया वा, तैस्सह भोजनम्, तत्पक्वान्नतत्स्वामिकान्नभोजनमित्यादिव्यवहारः । एतादृशव्यवहाराभावे नैतयोराशौचम् । अत्र सूतकमिति मृताशौचस्याप्युपलक्षणार्थम् । समनन्तरश्लोकेनैव

तात्कालिकशुद्धिकथनं किन्त्वात्यन्तिकाभावकथनम् । यदि तात्कालिक्येव शुद्धिरभिप्रेता स्यात्तर्हि वाक्ये कालद्योतकपदेन भवितव्यमासीत् 'न तेषां सूतकं तदा' इतिवत् न कालवाचि पदमत्रास्ति । अतो न तात्कालिकशुद्धिव्याख्यानमनेन संगच्छते । नातिभारो शास्त्रस्य । यदि तात्कालिक्येव शुद्धिर्विवक्षिता स्यात्तर्हि तथैवावक्ष्यत् । किन्तु नैवावोचत् । 'न तेषां सूतकम्' इत्येवावोचत् । यथावचनं तथैव ग्रहणं युक्तमविरोधे सति । नात्र विरोधप्रसङ्गः। तात्कालिकशुद्धिवचनस्याशौचिभिः सह संपर्कभावपक्षेऽर्थवत्वेन पृथग्व्यवस्थाप्यमानत्वात् । तस्मात्संपर्कमकुर्वाणस्याग्निहोत्रिण आशौचाभाव आत्यन्तिक इति सिद्धः ।

किञ्च तत्रैव पराशरस्मृतौ त्रिभिः श्लोकैः सद्यश्शौचमाशौचाभावश्च विहितः केषाञ्चन तत्र परिगणितानाम् । 'शिल्पिनः कारुका वैद्या दासीदासाश्च नापिताः । राजानः श्रोत्रियाश्चैव सद्यश्शौचाः प्रकीर्तिताः ॥ सव्रतो सत्रपूतश्चाऽऽहिताग्निश्च यो द्विजः । राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥ उद्यतो निधने दान आर्तो विप्रो निमन्त्रितः । तदैव ऋषिभिर्दृष्टं यथा कालेन शुध्यति ॥' (परा.३–२२,२३,२४) इति । अत्र पठितानां बहूनां तत्तत्कर्मकाल एवाशौचाभाव इति स्मृत्यन्तरेभ्योऽवगम्यते। तथा चैतच्छलोकव्याख्यानावसरे स्मृत्यन्तरश्लोका उदाहृताः पराशरमाधवे – 'तथा चादिपुराणे – 'शिल्पिनश्चित्रकाराद्याः कर्म यत्साधयन्त्यलम् । तत्कर्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्मणि । सूपकारेण यत्कर्म करणीयं नरेष्विह । तदन्यो नैव जानाति तस्माच्छुद्धः स सूपकृत् । चिकित्सको यत्कुरुते तदन्येन न शक्यते । तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः । दास्यो दासाश्च यत्किञ्चित् कुर्वन्त्यपि च लीलया । तदन्यो न क्षमः कर्तुं तस्मात्ते शुचयः सदा । राजा करोति यत्कर्म स्वप्नेऽप्यन्यस्य तत्कथम् । एवं सति नृपः शुद्धः संस्पर्शे मृतसूतके । यत्कर्म राजभृत्यानां हस्त्यश्वगमनादिकम् । तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः' इति । विष्णुरपि – 'आशौचं न राज्ञां राजकर्मणि, न व्रतीनां व्रते, न सत्रिणां सत्रे, न कारूणां कारुकर्मणि, न राजाज्ञाकारिणां तदिच्छायाम्' इति । पराशरश्लोके परिगणितेषु विशिष्टक्रियावत्सु यद्यपि बहूनां विषये तत्कर्मकालो निर्धारयितुं शक्यः तथापि सन्त्यन्ये येषां विषये तत्तत्कर्मकालावधिर्न शक्यते निर्धारयितुम् । ते च श्रोत्रियसत्रपूताहिताग्न्यार्ताः । एतेषां विषये कथं 'तत्तत्कर्मकाल' इति विशेषः सङ्गच्छत इति चिन्त्यम् । नैतेषां विशिष्टक्रिया काचिद्विद्यतेऽन्येषामिव, या नान्येन निर्वर्तयितुं शक्या, येन तत्तत्कर्मकाल एवैतेषामप्याऽऽशौचाभावं वक्तुं शक्यते । अपि च श्रोत्रियादिव्यतिरिक्तानामनाशौचिभिः सहापरिहार्यसंपर्कत्वादेव

विशिष्टकर्मानिर्धारणे। 'सूतकं नास्ति', 'सद्यश्शौचाः' इत्यादि यदुक्तं तदेतेषां विषय आत्यन्तिकाशौचाभावमेव वदति न तु तत्तद्विशिष्टकाल एवाशौचाभावो यथान्येषां तत्र परिगणितानां शिल्पादीनाम् । यथा ब्रह्मचारिसंन्यास्यादीनामत्यन्तमेवाशौचाभावः तथैव सत्रपूतादीनामपि इति ।

ननु नैष साध्वध्यवसायः। श्रोत्रियादीनामऽत्यन्ताऽऽशौचाभावस्य नान्यत्र कुत्रचिदपि स्मृतत्वादिति चेत् । नैष दोषः । अत्रैव कलियुगविशिष्टायां पराशरस्मृतौश्रोत्रियादीनां सद्यश्शौचादिकीर्तनात् । तथापि यद्यत्यन्ताऽऽशौचभावं न मर्षयति भवान्, तर्हि तेषामाशौचसंङ्कोचं वाऽङ्गीकर्तव्यं भवति। न श्रोत्रियाग्निहोत्रिणामन्येषामिवाशौचकालो दशदिनात्मकः । तथा च स्मृतत्वात् – 'एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः' (परा.३–५) इति पराशरस्मृतौ । नैतत्कालसङ्कोचविधानम् श्वस्तनिकादिसङ्कुचितवृत्तिविषयकं यथोक्तं पराशरमाधवे । तादृशव्यवस्थाया गमकाभावादेव। यदपि पराशरमाधवे वृत्तिसङ्कोचेनाऽऽशौचसङ्कोचे प्रमाणत्वेनोदाहृतं सङ्ग्रहकारवाक्यम्, तदपि न तत्प्रमाणयति। सङ्ग्रहकारवाक्यं चेत्थम्–'शिलोञ्छायाचितैर्जीवन् सद्यश्शुद्ध्येत् द्विजोत्तमः' इति । एतद्वाक्यं शिलोञ्छायाचितवृत्तीनां सद्यश्शौचविधायकं न त्वग्निवेदसमन्वितानामघ–स्सङ्कोचविधानबाधकम् तत् व्यवस्थापाकं वा। अपि च 'द्विहीनो दशभिर्दिनैः' इति स्मृत्युक्तव्यवस्था बाध्येत। किञ्च, अश्वस्तनिकेनाग्निहोत्रादिकर्मणां दुस्साध्यप्रायत्वादेवाऽग्निवेदसमन्वितत्वं न तद्विषयकं भवितुमर्हति । अपि चैतदाशौचसङ्कोचविधानं मन्वादिस्मृतावप्युपलभ्यते । तथा च मनुः – 'दशाहं शावमाशौचं सपिण्डेषु विधीयते । अर्वाक् संचयनादस्थिनां त्र्यहमेकाहमेव वा' (मनु.५–५९) इति । अस्य व्याख्यानावसरे कुल्लूक आह–'त्र्यहमेकाहं वाऽहश्शब्दोऽहोरात्रपरः। अयं चाग्निवेदादिगुणापेक्षो व्यवस्थितविकल्पः' इति। एतच्च दक्षवाक्येन प्रमाणयति। अतो न एकाहराद्याशौचं सङ्कुचितवृत्तिविषयत्वेन नेयम्। न चायमाशौचसङ्कोचः कलिवर्ज्ये पठितत्वान्नानुसरणीयः। नैकेनापि मनुस्मृतिव्याख्यानकारेण कुल्लूकादिना कलिवर्ज्यपठितत्वेन परामर्शात्। अपि च कलियुगार्थमेव विशेषेण स्मृतायां पराशरस्मृतौ सङ्कोचस्य विहितत्वान्नैष सङ्कोचविधिरुपेक्षामर्हति। तस्माद्यद्यपि श्रोत्रियाग्निहोत्रिणामात्यन्तिकाशौचाभावं न सहते भवान्, तथापि तयोराशौचसङ्कोचस्तु भवताऽवश्यमभ्युपगन्यव्यमेवाऽकामेनापि। अग्निहोत्रिविषय एष सङ्कोचोऽपि संपर्कासंपर्ककृतविशेषेणैव नेयः । तद्यथा यत्र संपर्कोऽस्ति तत्रैकाहेन शुद्धिः। तदहन्यपि तात्कालिकी शुद्धिः श्रौतकर्मानुष्ठानाय । यत्र तु संपर्को नास्ति तत्रात्यन्ताशौचाभाव एवेति सर्वं शम् ।